तदपेक्षत्वात् ।।४१।। नातीतानागतयोरितरेतरापेक्षासिद्धिः ।।४२।। वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ।।४३।। कृतताकर्तव्यतोपपत्तेस्तूभयथाग्रहणम् ।।४४।। अत्यन्तप्रायैकदेश- साधर्म्यादुपमानासिद्धिः ।।४५।। प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ।।४६।। प्रत्यक्षेणाऽप्रत्यक्षसिद्धेः ।।४७।। नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ।।४८।। तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ।।४९।। शब्दोऽनुमानमर्थमस्यानुपलब्धेरनुमेयत्वात् ।।५०।। उपलब्धेरद्विप्रवृत्तित्वात् ।।५१।। सम्बन्धाच्च ।।५२।। आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः ।।५३।। पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ।।५४।। शब्दार्थव्यवस्थानादप्रतिषेधः ।।५५।। न, सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ।।५६।। जातिविशेषे चानियमात् ।।५७।। तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ।।५८।। न कर्मकर्तृसाधनवैगुण्यात् ।।५९।। अभ्युपेत्य कालभेदे दोषवचनात् ।।६०।। अनुवादोपपत्तेश्च ।।६१।। वाक्यविभागस्य चार्थग्रहणात् ।।६२।। विध्यर्थवादानुवादवचनविनियोगात् ।।६३।। विधिर्विधायकः ।।६४।। स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ।।६५।। विधिविर्हितस्यानुवचनमनुवादः ।।६६।। नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ।।६७।। शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ।।६८।। मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ।।६९।।

।। इति द्वितीयाध्यायस्य प्रथममाह्निकम् ।।

## अथ द्वितीयाध्यायस्य द्वितीयमाह्निकम्

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ।।१।। शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ।।२।। अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ।।३।। अनर्थापत्तावर्थापत्त्याभिमानात् ।।४।। प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ।।५।। तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ।।६।। नाभावप्रामाण्यं प्रमेयासिद्धेः ।।७।। लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ।।८।। असत्यर्थे नाभाव इति चेन्न, अन्यलक्षणोपपत्तेः ।।९।। तत्सिद्धेरलक्षितेष्वहेतुः ।।१०।। न, लक्षणावस्थितापेक्षासिद्धेः ।।११।। प्रागुत्पत्तेरभावोपपत्तेश्च ।।१२।। आदिमत्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ।।१३।। न, घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ।।१४।। तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ।।१५।। सन्तानानुमानविशेषणात् ।।१६।। कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचारः ।।१७।। प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ।।१८।। तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ।।१९।। अनुपलम्भादप्यनुपलब्धिसद्भावान्नावरणानुपपत्तिरनुपलम्भात् ।।२०।। अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ।।२१।। अस्पर्शत्वात् ।।२२।। न, कर्मानित्यत्वात् ।।२३।। न, अणु नित्यत्वात् ।।२४।। सम्प्रदानात् ।।२५।। तदन्तरालानुपलब्धेरहेतुः ।।२६।। अध्यापनादप्रतिषेधः ।।२७।। उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ।।२८।। अभ्यासात् ।।२९।। नान्यत्वेऽप्यभ्यासस्योपचारात् ।।३०।। अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः ।।३१।। तदभावे नास्त्यनन्यता, तयोरितरेतरापेक्षसिद्धेः ।।३२।। विनाशकारणानुपलब्धेः ।।३३।। अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ।।३४।। उपलभ्यमाने चानुपलब्धेरसत्वादनपदेशः ।।३५।। पाणिनिमित्तप्रश्लेषाच्छशब्दाभावे नानुपलब्धिः ।।३६।। विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ।।३७।। अस्पर्शत्वादप्रतिषेधः ।।३८।। विभक्त्यन्तरोपपत्तेश्च समासे ।।३९।। विकारादेशोपदेशात्संशयः ।।४०।। प्रकृतिविवृद्धौ विकारविवृद्धेः ।।४१।। न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ।।४२।। द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ।।४३।। नातुल्यप्रकृतीनां विकारविकल्पात् ।।४४।। द्रव्यविकार-

वैषम्याद् वर्णविकारविकल्पः ।।४५।। न, विकारधर्मानुपपत्तेः ।।४६।। विकारप्राप्तानामपुनरापत्तेः ।।४७।। सुवर्णादीनां पुनरापत्तेरहेतुः ।।४८।। न, तद्विकाराणां सुवर्णभावाव्यतिरेकात् ।।४९।। वर्णत्वयाव्यतिरेका-द्वर्णविकाराणामप्रतिषेधः ।।५०।। सामान्यवतो धर्मयोगो न सामान्यस्य ।।५१।। नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ।।५२।। नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ।।५३।। अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ।।५४।। विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ।।५५।। प्रकृत्यनियमाद् वर्णविकाराणाम् ।।५६।। अनियमे नियमान्नानियमः ।।५७।। नियमानियम-विरोधादनियमे नियमाच्चाप्रतिषेधः ।।५८।। गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ।।५९।। ते विभक्त्यन्ताः पदम् ।।६०।। तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात्संशयः ।।६१।। या शब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासाऽनुबन्धानां व्यक्तावुपचाराद् व्यक्तिः ।।६२।। न तदनवस्थानात् ।।६३।। सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ।।६४।। आकृतिस्तद-पेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ।।६५।। व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ।।६६।। न, आकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ।।६७।। व्यक्त्याकृतिजातयस्तु पदार्थः ।।६८।। व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ।।६९।। आकृतिर्जातिलिङ्गाख्या ।।७०।। समानप्रसवात्मिका जातिः ।।७१।।

।। इति द्वितीयाध्यायस्य द्वितीयमाह्निकम् ।।

## अथ तृतीयाध्यायस्य प्रथममाह्निकम्

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ।।१।। न, विषयव्यवस्थानात् ।।२।। तद्व्यवस्थानादेवात्म-सद्भावादप्रतिषेधः ।।३।। शरीरदाहे पातकाभावात् ।।४।। तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ।।५।। न, कार्याश्रयकर्तृवधात् ।।६।। सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ।।७।। नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ।।८।। एकविनाशे द्वितीयाविनाशान्नैकत्वम् ।।९।। अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ।।१०।। दृष्टान्तविरोधादप्रतिषेधः ।।११।। इन्द्रियान्तरविकारात् ।।१२।। न, स्मृतेः स्मर्त्तव्यविषयत्वात् ।।१३।। तदात्मगुणसद्भावादप्रतिषेधः ।।१४।। अपरिसङ्ख्यानाच्च स्मृतिविषयस्य ।।१५।। न, आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ।।१६।। ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ।।१७।। नियमश्च निरनुमानः ।।१८।। पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ।।१९।। पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः ।।२०।। नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ।।२१।। प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ।।२२।। अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ।।२३।। नान्यत्र प्रवृत्त्यभावात् ।।२४।। वीतरागजन्मादर्शनात् ।।२५।। सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ।।२६।। न, सङ्कल्पनिमित्तत्वाद्रागादीनाम् ।।२७।। पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ।।२८।। निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ।।२९।। गन्धक्लेदपाक-व्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ।।३०।। पार्थिवं गुणान्तरोपलब्धेः ।।३१।। श्रुतिप्रामाण्याच्च ।।३२।। कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः ।।३३।। महदणुग्रहणात् ।।३४।। रश्म्यर्थसन्निकर्ष-विशेषात्तद्ग्रहणम् ।।३५।। तदनुपलब्धेरहेतुः ।।३६।। नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ।।३७।।

द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ।।३८।। अनेक द्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ।।३६।। कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ।।४०।। अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः ।।४१।। मध्यन्दिनोल्काप्रकाशानुपलिब्धवत्तदनुपलब्धिः ।।४२।। न, रात्रावप्यनुपलब्धेः ।।४३।। बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ।।४४।। अभिव्यक्तौ चाभिभवात् ।।४५।। नक्तञ्चरनयनरश्मिदर्शनाच्च ।।४६।। अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ।।४७।। कुड्यान्तरितानुपलब्धेरप्रतिषेधः ।।४८।। अप्रतिघातात्सन्निकर्षोपपत्तिः ।।४६।। आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ।।५०।। नेतरेतरधर्मप्रसङ्गात् ।।५१।। आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ।।५२।। दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ।।५३।। स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ।।५४।। त्वगव्यतिरेकात् ।।५५।। न युगपदर्थानुपलब्धेः ।।५६।। विप्रतिषेधाच्च न त्वगेका ।।५७।। इन्द्रियार्थपञ्चत्वात् ।।५८।। न, तदर्थबहुत्वात् ।।५६।। गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः ।।६०।। विषयत्वाव्यतिरेकादेकत्वम् ।।६१।। न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ।।६२।। भूतगुणविशेषोपलब्धेस्तादात्म्यम् ।।६३।। गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ।।६४।। अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ।।६५।। न सर्वगुणानुपलब्धेः ।।६६।। एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ।।६७।। विष्टं ह्यपरं परेण ।।६८।। न, पार्थिवाप्ययोः प्रत्यक्षत्वात् ।।६६।। पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ।।७०।। तद्व्यवस्थानं तु भूयस्त्वात् ।।७१।। सगुणानामिन्द्रियभावात् ।।७२।। तेनैव तस्याग्रहणाच्च ।।७३।। न, शब्दगुणोपलब्धेः ।।७४।। तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ।।७५।।

।। इति तृतीयाध्यायस्य प्रथममाह्निकम् ।।

## अथ तृतीयाध्यायस्य द्वितीयमाह्निकम्

कर्माकाशसाधर्म्यात्संशयः ।।१।। विषयप्रत्यभिज्ञानात् ।।२।। साध्यसमत्वादहेतुः ।।३।। न, युगपदग्रहणात् ।।४।। अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ।।५।। क्रमवृत्तित्वादयुगपद्ग्रहणम् ।।६।। अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ।।७।। न गत्यभावात् ।।८।। स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ।।६।। स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ।।१०।। नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ।।११।। नोत्पत्तिविनाशकारणोपलब्धेः ।।१२।। क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुत्पत्तिः ।।१३।। लिङ्गतो ग्रहणान्नानुपलब्धिः ।।१४।। न पयसः परिणामगुणान्तरप्रादुर्भावात् ।।१५।। व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ।।१६।। क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ।।१७।। नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ।।१८।। युगपज्ज्ञेयानुपलब्धेश्च न मनसः ।।१६।। तदात्मगुणत्वेऽपि तुल्यम् ।।२०।। इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ।।२१।। नोत्पत्तिकारणानपदेशात् ।।२२।। विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ।।२३।। अनित्यत्वग्रहाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ।।२४।। ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ।।२५।। नान्तःशरीरवृत्तित्वान्मनसः ।।२६।। साध्यत्वादहेतुः ।।२७।। स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ।।२८।। न, तदाशुगतित्वान्मनसः ।।२६।। न स्मरणकालानियमात् ।।३०।। आत्मप्रेरणयदृच्छाज्ञताभिश्च

न संयोगविशेषः ।।३१।। व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ।।३२।। प्रणिधानलिङ्गादिज्ञानानामयुगपद् भावादयुगपत्स्मरणम् ।।३३।। प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः ।।३४।। ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्योः ।।३५।। तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ।।३६।। परश्वादिष्वारम्भनिवृत्तिदर्शनात् ।।३७।। कुम्भादिष्वनुपलब्धेरहेतुः ।।३८।। नियमानियमौ तु तद्विशेषकौ ।।३९।। यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ।।४०।। परिशेषाद्यथोक्तहेतूपपत्तेश्च ।।४१।। स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ।।४२।। प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाऽऽश्रयाऽऽश्रितसम्बन्धाऽऽनन्तर्यवियोगैककार्यविरोधाऽतिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माऽधर्मनिमित्तेभ्यः ।।४३।। कर्मानववस्थायिग्रहणात् ।।४४।। अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाद्यव्यक्तग्रहणवत् ।।४५।। हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ।।४६।। प्रदीपार्चिः सन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ।।४७।। द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ।।४८।। यावच्छरीरभावित्वाद्रूपादीनाम् ।।४९।। न, पाकगुणान्तरोत्पत्तेः ।।५०।। प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ।।५१।। शरीरव्यापित्वात् ।।५२।। न, केशनखादिष्वनुपलब्धेः ।।५३।। त्वक्पर्यन्तत्वाच्छरीरस्य केशखादिष्वप्रसङ्गः ।।५४।। शरीरगुणवैधर्म्यात् ।।५५।। न रूपादीनामितरेतरवैधर्म्यात् ।।५६।। ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ।।५७।। ज्ञानायौगपद्यादेकं मनः ।।५८।। न, युगपदनेकक्रियोपलब्धेः ।।५९।। अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ।।६०।। यथोक्तहेतुत्वाच्चाणु ।।६१।। पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ।।६२।। भूतेभ्यो मूर्त्त्युपादानवत्तदुपादानम् ।।६३।। न, साध्यसमत्वात् ।।६४।। नोत्पत्तिनिमित्तत्वान्मातापित्रोः ।।६५।। तथाऽऽहारस्य ।।६६।। प्राप्तौ चानियमात् ।।६७।। शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ।।६८।। एतेना नियमः प्रत्युक्तः ।।६९।। उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः ।।७०।। तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ।।७१।। मनः कर्मनिमित्तत्वाच्च संयोगानुच्छेदः ।।७२।। नित्यत्वप्रसङ्गश्च प्रायेणानुपपत्तेः ।।७३।। अणुश्यामतानित्यत्ववदेतत्स्यात् ।।७४।। नाकृताभ्यागमप्रसङ्गात् ।।७५।।

।। इति तृतीयाध्यायस्य द्वितीयमाह्निकम् ।।

## अथ चतुर्थाध्यायस्य प्रथममाह्निकम्

प्रवृत्तिर्यथोक्ता ।।१।। तथा दोषाः ।।२।। तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ।।३।। नैकप्रत्यनीकभावात् ।।४।। व्यभिचारादहेतुः ।।५।। तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ।।६।। निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ।।७।। न, दोषलक्षणावरोधान्मोहस्य ।।८।। निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ।।९।। आत्मनित्यत्वे प्रेत्यभावसिद्धिः ।।१०।। व्यक्ताद् व्यक्तायां प्रत्यक्षप्रामाण्यात् ।।११।। न घटाद् घटनिष्पत्तेः ।।१२।। व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ।।१३।। अभावाद् भावोत्पत्तिः नानुपमृद्य प्रादुर्भावात् ।।१४।। व्याघातादप्रयोगः ।।१५।। नातीतानागतयोः कारकशब्दप्रयोगात् ।।१६।। न विनष्टेभ्योऽनिष्पत्तेः ।।१७।। क्रमनिर्देशादप्रतिषेधः ।।१८।। ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ।।१९।। न, पुरुषकर्माभावे फलानिष्पत्तेः ।।२०।। तत्कारितत्वादहेतुः ।।२१।। अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ।।२२।। अनिमित्तनिमित्तत्वान्नानिमित्ततः ।।२३।। निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ।।२४।। सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ।।२५।। नानित्यतानित्यत्वात् ।।२६।। तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ।।२७।। नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ।।२८।।

सर्वं नित्यं पञ्चभूतनित्यत्वात् ।।२६।। नोत्पत्तिविनाशकारणोपलब्धेः ।।३०।। तल्लक्षणावरोधादप्रतिषेधः ।।३१।। नोत्पत्तितत्कारणोपलब्धेः ।।३२।। न, व्यवस्थानुपपत्तेः ।।३३।। सर्वं पृथग्भावलक्षणपृथक्त्वात् ।।३४।। नानेकलक्षणैरेकभावनिष्पत्तेः ।।३५।। लक्षणव्यवस्थानादेवाऽप्रतिषेधः ।।३६।। सर्वमभावो भावेष्वितरेतराभावसिद्धेः ।।३७।। न स्वभावसिद्धेर्भावानाम् ।।३८।। न स्वभावसिद्धिरापेक्षिकत्वात् ।।३६।। व्याहतत्वादयुक्तम् ।।४०।। संख्यैकान्तासिद्धिः कारणानुपपत्युपपत्तिभ्याम् ।।४१।। न कारणावयवभावात् ।।४२।। निरवयवत्वादहेतुः ।।४३।। सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ।।४४।। न सद्यः कालान्तरोपभोग्यत्वात् ।।४५।। कालान्तरेणाऽनिष्पत्तिर्हेतुविनाशात् ।।४६।। प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ।।४७।। नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् ।।४८।। उत्पादव्ययदर्शनात् ।।४६।। बुद्धिसिद्धं तु तदसत् ।।५०।। आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः ।।५१।। प्रीतेरात्माश्रयत्वादप्रतिषेधः ।।५२।। न पुत्रपशुस्त्री-परिच्छेदहिरण्यान्नादिफलनिर्देशात् ।।५३।। तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ।।५४।। विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ।।५५।। न सुखस्याप्यन्तरालनिष्पत्तेः ।।५६।। बाधनाऽनिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ।।५७।। दुःखविकल्पे सुखाभिमानाच्च ।।५८।। ऋणक्लेशप्रवृत्यनुबन्धादपवर्गाभावः ।।५६।। प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ।।६०।। समारोपणादात्मन्यप्रतिषेधः ।।६१।। पात्रचयान्तानुपपत्तेश्च फलाभावः ।।६२।। सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ।।६३।। न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ।।६४।। न क्लेशसन्ततेः स्वाभाविकत्वात् ।।६५।। प्रागुत्पत्तेरभावानित्यत्व-वत्स्वाभाविकेऽप्यनित्यत्वम् ।।६६।। अणुश्यामतानित्यत्ववद्वा ।।६७।। न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ।।६८।।

।। इति चतुर्थाध्यायस्य प्रथममाह्निकम् ।।

## अथ चतुर्थाध्यायस्य द्वितीयमाह्निकम्

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ।।१।। दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ।।२।। तन्निमित्तंत्त्वमवयव्यभिमानः ।।३।। विद्याऽविद्याद्वैविध्यात् संशयः ।।४।। तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ।।५।। वृत्यनुपपत्तेरपि तर्हि न संशयः ।।६।। कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ।।७।। तेषु चावृत्तेरवयव्यभावः ।।८।। पृथक् चावयवेभ्योऽवृत्तेः ।।६।। न चावयव्यवयवाः ।।१०।। एकस्मिन् भेदाभावात् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ।।११।। अवयवान्तरभावेऽप्यवृत्तेरहेतुः ।।१२।। केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ।।१३।। स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ।।१४।। अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ।।१५।। न प्रलयोऽणुसद्भावात् ।।१६।। परं वा त्रुटेः ।।१७।। आकाशव्यतिभेदात् तदनुपपत्तिः ।।१८।। आकाशासर्वगतत्वं वा ।।१६।। अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ।।२०।। शब्दसंयोगविभवाच्च सर्वगतम् ।।२१।। अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ।।२२।। मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ।।२३।। संयोगोपपत्तेश्च ।।२४।। अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ।।२५।। बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ।।२६।। व्याहतत्वादहेतुः ।।२७।। तदाश्रयत्वादपृथग्ग्रहणम् ।।२८।। प्रमाणतश्चार्थप्रतिपत्तेः ।।२६।। प्रमाणानुपपत्युपपत्तिभ्याम् ।।३०।।

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ।।३१।। मायागन्धर्वनगरमृगतृष्णिकावद्वा ।।३२।। हेत्वभावादसिद्धिः ।।३३।। स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ।।३४।। मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे ।।३५।। बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ।।३६।। तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ।।३७।। समाधिविशेषाभ्यासात् ।।३८।। नार्थविशेषप्राबल्यात् ।।३६।। क्षुदादिभिः प्रवर्तनाच्च ।।४०।। पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ।।४१।। अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ।।४२।। अपवर्गेऽप्येवं प्रसङ्गः ।।४३।। न निष्पन्नावश्यम्भावित्वात् ।।४४।। तदभावश्चापवर्गे ।।४५।। तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ।।४६।। ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ।।४७।। तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात् ।।४८।। प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ।।४६।। तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजसंरक्षणार्थं कण्टकशाखावरणवत् ।।५०।। ताभ्यां विगृह्य कथनम् ।।५१।।

।। इति चतुर्थाध्यायस्य द्वितीयमाह्निकम् ।।

## अथ पञ्चमाध्यायस्य प्रथममाह्निकम्

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ।।१।। साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ।।२।। गोत्वाद् गोसिद्धिवत्तत्सिद्धिः ।।३।। साध्य- दृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ।।४।। किञ्चित्साधर्म्यादुप- संहारसिद्धेर्वैधर्म्यादप्रतिषेधः ।।५।। साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ।।६।। प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ।।७।। घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ।।८।। दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ।।६।। प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ।।१०।। प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ।।११।। प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ।।१२।। तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ।।१३।। सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ।।१४।। साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ।।१५।। उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ।।१६।। प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ।।१७।। त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ।।१८।। न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ।।१६।। प्रतिषेधानुपपत्तेश्च प्रतिषेध्याप्रतिषेधः ।।२०।। अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ।।२१।। अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ।।२२।। एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावो- पपत्तेरविशेषसमः ।।२३।। क्वचिद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ।।२४।। उभय- कारणोपपत्तेरुपपत्तिसमः ।।२५।। उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ।।२६।। निर्दिष्ट- कारणाभावेऽप्युपलम्भादुपलब्धिसमः ।।२७।। कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ।।२८।। तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ।।२६।। अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ।।३०।। ज्ञानविकल्पानां च भावाभावसंवदेनादध्यात्मम् ।।३१।। साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ।।३२।। साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्य-

साधर्म्याच्च ।।३३।। दृष्टान्ते च साध्यसाधनाभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ।।३४।। नित्य- मनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ।।३५।। प्रतिषेध्ये नित्यमनित्यभावादनित्ये ऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ।।३६।। प्रयत्नकार्यानेकत्वात्कार्यसमः ।।३७।। कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ।।३८।। प्रतिषेधेऽपि समानो दोषः ।।३६।। सर्वत्रैवम् ।।४०।। प्रतिषेधविप्रतिषेधे प्रतिषेधसमानो दोषवद्दोषः ।।४१। प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ।।४२।। स्वपक्षलक्षणापेक्षोपपत्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोष इति ।।४३।।

।। इति पञ्चमाध्यायस्य प्रथममाह्निकम् ।।

## अथ पञ्चमाध्यायस्य द्वितीयमाह्निकम्

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञांसन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभाविक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानु ऽसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ।।१।। प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ।।२।। प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ।।३।। प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ।।४।। पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ।।५।। अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ।।६।। प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ।।७।। वर्णक्रमनिर्देशवन्निरर्थकम् ।।८।। परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ।।६।। पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ।।१०।। अवयवविपर्यासवचनमप्राप्तकालम् ।।११।। हीनमन्यतमेनाप्यवयवेन न्यूनम् ।।१२।। हेतूदाहरणाधिकमधिकम् ।।१३।। शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ।।१४।। अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः ।।१५।। अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ।।१६।। विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ।।१७।। अविज्ञातं चाज्ञानम् ।।१८।। उत्तरस्याप्रतिपत्तिरप्रतिभा ।।१६।। कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ।।२०।। स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ।।२१।। निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ।।२२।। अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ।।२३।। सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ।।२४।। हेत्वाभासाश्च यथोक्ताः ।।२५।।

।। इति पञ्चमाध्यायस्य द्वितीयमाह्निकम् ।।

।। समाप्तं चेदं न्यायदर्शनम् ।।

# वैशेषिकदर्शनम्

## प्रथमाध्याये प्रथममाह्निकम्

अथातो धर्मं व्याख्यास्यामः ।।१।। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।।२।। तद्वचनादाम्नायस्य प्रामाण्यम् ।।३।। धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ।।४।। पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ।।५।। रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ।।६।। उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ।।७।। सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ।।८।। द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ।।९।। द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ।।१०।। कर्म कर्मसाध्यं न विद्यते ।।११।। न द्रव्यं कार्यं कारणं च वधति ।।१२।। उभयथा गुणाः ।।१३।। कार्यविरोधि कर्म ।।१४।। क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ।।१५।। द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ।।१६।। एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ।।१७।। द्रव्यगुणकर्माणां द्रव्यं कारणं सामान्यम् ।।१८।। तथा गुणः ।।१९।। संयोगविभागवेगानां कर्म समानम् ।।२०।। न द्रव्याणां कर्म ।।२१।। व्यतिरेकात् ।।२२।। द्रव्याणां द्रव्यं कार्यं सामान्यम् ।।२३।। गुणवैधर्म्यान्न कर्मणां कर्म ।।२४।। द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ।।२५।। असमवायात् सामान्यकार्यं कर्म न विद्यते ।।२६।। संयोगानां द्रव्यम् ।।२७।। रूपाणां रूपम् ।।२८।। गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ।।२९।। संयोगविभागाश्च कर्मणाम् ।।३०।। कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ।।३१।।

।। इति प्रथमाध्याये प्रथममाह्निकम् ।।

## अथ प्रथमाध्याये द्वितीयमाह्निकम्

कारणाभावात्कार्याभावः ।।१।। न तु कार्याभावात्कारणाभावः ।।२।। सामान्यं विशेष इति बुद्ध्यपेक्षम् ।।३।। भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ।।४।। द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ।।५।। अन्यत्रान्त्येभ्यो विशेषेभ्यः ।।६।। सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ।।७।। द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ।।८।। गुणकर्मसु च भावान्न कर्म न गुणः ।।९।। सामान्यविशेषाभावेन च ।।१०।। अनेकद्रव्यवत्वेन द्रव्यत्वमुक्तम् ।।११।। सामान्यविशेषाभावेन च ।।१२।। तथा गुणेषु भावाद् गुणत्वमुक्तम् ।।१३।। सामान्यविशेषाभावेन च ।।१४।। कर्मसु भावात्कर्मत्वमुक्तम् ।।१५।। सामान्यविशेषाभावेन च ।।१६।। सदिति लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको भावः ।।१७।।

।। इति प्रथमाध्याये द्वितीयमाह्निकम् ।।

## अथ द्वितीयाध्याये प्रथममाह्निकम्

रूपरसगन्धस्पर्शवती पृथिवी ।।१।। रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ।।२।। तेजो रूपस्पर्शवत् ।।३।। स्पर्शवान् वायुः ।।४।। त आकाशे न विद्यन्ते ।।५।। सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ।।६।। त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ।।७।। विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् ।।८।। स्पर्शश्च वायोः ।।९।। न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ।।१०।। अद्रव्यवत्त्वेन द्रव्यम् ।।११।। क्रियावत्वाद् गुणवत्त्वाच्च ।।१२।। अद्रव्यत्वेन नित्यत्वमुक्तम् ।।१३।। वायोर्वायुसंमूर्च्छनं नानात्वं लिङ्गम् ।।१४।। वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ।।१५।। सामान्यतोदृष्टाच्चाविशेषः ।।१६।। तस्मादागमिकम् ।।१७।। संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ।।१८।। प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ।।१९।। निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ।।२०।। तदलिङ्गमेकद्रव्यत्वात् कर्मणः ।।२१।। कारणान्तरानुक्लृप्तिवैधर्म्याच्च ।।२२।। संयोगादभावः कर्मणः ।।२३।। कारणगुणपूर्वकः कार्यगुणो दृष्टः ।।२४।। कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ।।२५।। परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनो गुणः ।।२६।। परिशेषाल्लिङ्गमाकाशस्य ।।२७।। द्रव्यत्वनित्यत्वे वायुना व्याख्याते ।।२८।। तत्त्वं भावेन ।।२९।। शब्दलिङ्गविशेषाद् विशेषलिङ्गाभावाच्च ।।३०।। तदनुविधानादेकपृथक्त्वं चेति ।।३१।।

।। इति द्वितीयाऽध्याये प्रथममाह्निकम् ।।

## अथ द्वितीयाध्याये द्वितीयमाह्निकम्

पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तरप्रादुर्भावो वस्त्रो गन्धाभावलिङ्गम् ।।१।। एतेनाप्सूष्णता व्याख्याता ।।२।। व्यवस्थितः पृथिव्यां गन्धः ।।३।। तेजस्युष्णता ।।४।। अप्सु शीतता ।।५।। अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ।।६।। द्रव्यत्वनित्यत्वे वायुना व्याख्याते ।।७।। तत्त्वं भावेन ।।८।। नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ।।९।। इत इदमिति यतस्तद्दिशं लिङ्गम् ।।१०।। द्रव्यत्वनित्यत्वे वायुना व्याख्याते ।।११।। तत्त्वं भावेन ।।१२।। कार्यविशेषेण नानात्वम् ।।१३।। आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची ।।१४।। तथा दक्षिणा प्रतीची उदीची च ।।१५।। एतेन दिगन्तरालानि व्याख्यातानि ।।१६।। सामान्यप्रत्यक्षाद् विशेषस्मृतेश्च संशयः ।।१७।। दृष्टं च दृष्टवत् ।।१८।। यथादृष्टमयथादृष्टत्वाच्च ।।१९।। विद्याविद्यातश्च संशयः ।।२०।। श्रोत्रग्रहणो योऽर्थः स शब्दः ।।२१।। तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वात् ।।२२।। एकद्रव्यत्वान्न द्रव्यम् ।।२३।। नापि कर्माऽचाक्षुषत्वात् प्रत्ययस्य ।।२४।। गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ।।२५।। सतो लिङ्गाभावात् ।।२६।। नित्यवैधर्म्यात् ।।२७।। अनित्यश्चायं कारणतः ।।२८।। न चासिद्धं विकारात् ।।२९।। अभिव्यक्तौ दोषात् ।।३०।। संयोगाद् विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ।।३१।। लिङ्गाच्चानित्यः शब्दः ।।३२।। द्वयोस्तु प्रवृत्त्योरभावात् ।।३३।। प्रथमाशब्दात् ।।३४।। सम्प्रतिपत्तिभावाच्च ।।३५।। सन्दिग्धाः सति बहुत्वे ।।३६।। संख्याभावः सामान्यतः ।।३७।।

।। इति द्वितीयाध्याये द्वितीयमाह्निकम् ।।

## अथ तृतीयाध्याये प्रथममाह्निकम्

प्रसिद्धा इन्द्रियार्थाः ।।१।। इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ।।२।। सोऽनपदेशः ।।३।। कारणाज्ञानात् ।।४।। कार्येषु ज्ञानात् ।।५।। अज्ञानाच्च ।।६।। अन्यदेव हेतुरित्यनपदेशः ।।७।। अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ।।८।। संयोगि समवाय्येकार्थसमवायिविरोधि च ।।९।। कार्यं कार्यान्तरस्य ।।१०।। विरोध्यभूतं भूतस्य ।।११।। भूतमभूतस्य ।।१२।। भूतो भूतस्य ।।१३।। प्रसिद्धिपूर्वकत्वादपदेशस्य ।।१४।। अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः ।।१५।। यस्माद्विषाणी तस्मादश्वः ।।१६।। यस्माद्विषाणी तस्माद् गौरिति चानैकान्तिकस्योदाहरणम् ।।१७।। आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ।।१८।। प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ।।१९।।

।। इति तृतीयाध्याये प्रथममाह्निकम् ।।

## अथ तृतीयाध्याये द्वितीयमाह्निकम्

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ।।१।। तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ।।२।। प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ।।३।। प्राणापाननिमेषोन्मेषजीवन-मनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नश्चात्मनो लिङ्गानि ।।४।। तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ।।५।। यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ।।६।। सामान्यतोदृष्टाच्चाविशेषः ।।७।। तस्मादागमिकः ।।८।। अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ।।९।। यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ।।१०।। दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ।।११।। देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ।।१२।। सन्दिग्धस्तूपचारः ।।१३।। अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ।।१४।। देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरंप्रत्यक्षोऽहङ्कारः ।।१५।। सन्दिग्धस्तूपचारः ।।१६।। न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ।।१७।। अहमिति मुख्ययोग्याभ्यां शब्दवद् व्यतिरेकाव्यभिचाराद् विशेषसिद्धेर्नागमिकः ।।१८।। सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ।।१९।। व्यवस्थातो नाना ।।२०।। शास्त्रसामर्थ्याच्च ।।२१।।

।। इति तृतीयाध्याये द्वितीयमाह्निकम् ।।

## चतुर्थाध्याये प्रथममाह्निकम्

सदकारणवन्नित्यम् ।।१।। तस्य कार्यं लिङ्गम् ।।२।। कारणाभावात् कार्याभावः ।।३।। अनित्य इति विशेषतः प्रतिषेधभावः ।।४।। अविद्या ।।५।। महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः ।।६।। सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद् वायोरनुपलब्धिः ।।७।। अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ।।८।। तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ।।९।। तस्याभावादव्यभिचारः ।।१०।। संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ।।११।।

अरूपिष्वचाक्षुषाणि ।।१२।। एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ।।१३।।

।।इति चतुर्थाध्याये प्रथममाह्निकम् ।।

## अथ चतुर्थाध्याये द्वितीयमाह्निकम्

तत्पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ।।१।। प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ।।२।। गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ।।३।। अणुसंयोगस्त्वप्रतिषिद्धः ।।४।। तत्र शरीरं द्विविधं योनिजमयोनिजं च ।।५।। अनियतदिग्देशपूर्वकत्वात् ।।६।। धर्मविशेषाच्च ।।७।। समाख्याभावाच्च ।।८।। संज्ञाया आदित्वात् ।।९।। सन्त्ययोनिजाः ।।१०।। वेदलिङ्गाच्च ।।११।।

।। इति चतुर्थाध्याये द्वितीयमाह्निकम् ।।

## अथ पञ्चमाध्याये प्रथममाह्निकम्

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ।।१।। तथा हस्तसंयोगाच्च मुसले कर्म ।।२।। अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ।।३।। तथात्मसंयोगो हस्तकर्मणि ।।४।। अभिघातान्मुसलसंयोगाद्धस्ते कर्म ।।५।। आत्मकर्म हस्तसंयोगाच्च ।।६।। संयोगाभावे गुरुत्वात्पतनम् ।।७।। नोदनविशेषाभावान्नोर्ध्व न तिर्यग्गमनम् ।।८।। प्रयत्नविशेषान्नोदनविशेषः ।।९।। नोदनविशेषादुदसनविशेषः ।।१०।। हस्तकर्मणा दारककर्म व्याख्यातम् ।।११।। तथा दग्धस्य विस्फोटने ।।१२।। प्रयत्नाभावे प्रसुप्तस्य चलनम् ।।१३।। तृणे कर्म वायुसंयोगात् ।।१४।। मणिगमनं सूच्यभिसर्पणमदृष्टकारणम् ।।१५।। इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतुः ।।१६।।नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ।।१७।। संस्काराभावे गुरुत्वात् पतनम् ।।१८।।

।। इति पञ्चमाध्याये प्रथममाह्निकम् ।।

## अथ पञ्चमाध्याये द्वितीयमाह्निकम्

नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म ।।१।। तद्विशेषेणादृष्टकारितम् ।।२।। अपां संयोगाभावे गुरुत्वात् पतनम् ।।३।। द्रवत्वात् स्यन्दनम् ।।४।। नाड्यो वायुसंयोगादारोहणम् ।।५।। नोदनापीडनात् संयुक्तसंयोगाच्च ।।६।। वृक्षाभिसर्पणमित्यदृष्टकारितम् ।।७।। अपां सङ्घातो विलयनं च तेजः संयोगात् ।।८।। तत्र विस्फूर्जथुर्लिङ्गम् ।।९।। वैदिकं च ।।१०।। अपां संयोगाद् विभागाच्च स्तनयित्नोः ।।११।। पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ।।१२।। अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणूनां

मनसश्चाद्यं कर्मादृष्टकारितम् ।।१३।। हस्तकर्मणा मनसः कर्म व्याख्यातम् ।।१४।। आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ।।१५।। तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः संयोगः ।।१६।। अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ।।१७।। तदभावे संयोगाभावोऽप्रादुर्भावाश्च मोक्षः ।।१८।। द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ।।१९।। तेजसो द्रव्यान्तरेणावरणाच्च ।।२०।। दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि ।।२१।। एतेन कर्माणि गुणाश्च व्याख्याताः ।।२२।। निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ।।२३।। कारणं त्वसमवायिनो गुणाः ।।२४।। गुणैर्दिग्व्याख्याता ।।२५।। कारणेन कालः ।।२६।।

।। इति पञ्चमाध्याये द्वितीयमाह्निकम् ।।

## अथ षष्ठाध्याये प्रथममाह्निकम्

बुद्धिपूर्वा वाक्यकृतिर्वेदे ।।१।। ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ।।२।। बुद्धिपूर्वो ददातिः ।।३।। तथा प्रतिग्रहः ।।४।। आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ।।५।। तद्दुष्टभोजने न विद्यते ।।६।। दुष्टं हिंसायाम् ।।७।। तस्य समभिव्याहारतो दोषः ।।८।। तददुष्टे न विद्यते ।।९।। पुनर्विशिष्टे प्रवृत्तिः ।।१०।। समे हीने वा प्रवृत्तिः ।।११।। एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ।।१२।। तथा विरुद्धानां त्यागः ।।१३।। हीने परे त्यागः ।।१४।। समे आत्मत्यागः परत्यागो वा ।।१५।। विशिष्टे आत्मत्याग इति ।।१६।।

।। इति षष्ठाध्याये प्रथममाह्निकम् ।।

## अथ षष्ठाध्याये द्वितीयमाह्निकम्

दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ।।१।। अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ।।२।। चातुराश्रम्यमुपधा अनुपधाश्च ।।३।। भावदोष उपधाऽदोषोऽनुपधा ।।४।। यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचिः ।।५।। अशुचीति शुचिप्रतिषेधः ।।६।। अर्थान्तरं च ।।७।। अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद्विद्यते वाऽर्थान्तरत्वाद्यमस्य ।।८।। असति चाभावात् ।।९।। सुखाद्रागः ।।१०।। तन्मयत्वाच्च ।।११।। अदृष्टाच्च ।।१२।। जातिविशेषाच्च ।।१३।। इच्छाद्वेषपूर्विका धर्माधर्मयोः प्रवृत्तिः ।।१४।। तत्संयोगो विभागः ।।१५।। आत्मकर्मसु मोक्षो व्याख्यातः ।।१६।।

।। इति षष्ठाध्यायस्य द्वितीयममाह्निकम् ।।

## अथ सप्तमाध्याये प्रथममाह्निकम्

उक्ता गुणाः ।।१।। पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ।।२।। एतेन नित्येषु नित्यत्वमुक्तम् ।।३।। अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ।।४।। अनित्येष्वनित्या द्रव्यानित्यत्वात् ।।५।। कारणगुणपूर्वकाः पृथिव्यां पाकजाः ।।६।। एकद्रव्यत्वात् ।।७।। अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ।।८।। कारणबहुत्वाच्च ।।६।। अतो विपरीतमणु ।।१०।। अणु महदिति तस्मिन् विशेषभावाद् विशेषाभावाच्च ।।११।। एककालत्वात् ।।१२।। दृष्टान्ताच्च ।।१३।। अणुत्वमहत्त्व योरणुत्व-महत्त्वाभावः कर्मगुणैर्व्याख्यातः ।।१४।। कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ।।१५।। अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ।।१६।। एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ।।१७।। अनित्येऽनित्यम् ।।१८।। नित्ये नित्यम् ।।१६।। नित्यं परिमण्डलम् ।।२०।। अविद्या च विद्यालिङ्गम् ।।२१।। विभवान् महानाकाशस्तथा चात्मा ।।२२।। तदभावादणु मनः ।।२३।। गुणैर्दिग् व्याख्याता ।।२४।। कारणे कालः ।।२५।।

।। इति सप्तमाध्याये प्रथममाह्निकम् ।।

## अथ सप्तमाध्याये द्वितीयमाह्निकम्

रूपरसगन्धस्पर्शव्यक्तिरेकादर्थान्तरमेकत्वम् ।।१।। तथा पृथक्त्वम् ।।२।। एकत्वैकपृथक्त्वयोरेकत्वैक-पृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ।।३।। निःसंख्यत्वात् कर्मगुणानां सर्वेकत्वं च विद्यते ।।४।। भ्रान्तं तत् ।।५।। एकत्वाभावाद्भक्तिस्तु य विद्यते ।।६।। कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ।।७।। एतदनित्ययोर्व्याख्यातम् ।।८।। अन्यतरकर्मज उभयकर्मजः संयोगश्च संयोगः ।।६।। एतेन विभागो व्याख्यातः ।।१०।। संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ।।११।। कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ।।१२।। युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ।।१३।। गुणत्वात् ।।१४।। गुणोऽपि विभाव्यते ।।१५।। निष्क्रियत्वात् ।।१६।। असति नास्तीति च प्रयोगात् ।।१७।। शब्दार्थावसम्बन्धौ ।।१८।। संयोगिनो दण्डात् समवायिनो विशेषाच्च ।।१६।। सामयिकः शब्दादर्थप्रत्ययः ।।२०।। एकदिक्कालाभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ।।२१।। कारणपरत्वात् कारणाापरत्वाच्च ।।२२।। परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ।।२३।। कर्मभिः कर्माणि ।।२४।। गुणैर्गुणाः ।।२५।। इहेदमिति यतः कार्यकारणयोः स समवायः ।।२६।। द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ।।२७।। तत्त्वमभावेन ।।२८।।

।। इति सप्तमाध्याये द्वितीयमाह्निकम् ।।

## अथाष्टमाध्याये प्रथममाह्निकम्

द्रव्येषु ज्ञानं व्याख्यातम् ।।१।। तत्रात्मा मनश्चाप्रत्यक्षे ।।२।। ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ।।३।। गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ।।४।। सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ।।५।। सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ।।६।। द्रव्ये द्रव्यगुणकर्मापेक्षम् ।।७।। गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते ।।८।। समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ।।६।। द्रव्येष्वनितरेतरकारणाः ।।१०।। कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ।।११।।

।। इत्यष्टमाध्याये प्रथममाह्निकम् ।।

## अथाष्टमाध्याये द्वितीयमाह्निकम्

अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ।।१।। दृष्टेषु भावाददृष्टेष्वभावात् ।।२।। अर्थ इति द्रव्यगुणकर्मसु ।।३।। द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ।।४।। भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ।।५।। तथापस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् ।।६।।

।। इत्यष्टमाध्याये द्वितीयमाह्निकम् ।।

## अथ नवमाध्याये प्रथममाह्निकम्

क्रियागुणव्यपदेशाभावात् प्रागसत् ।।१।। सदसत् ।।२।। असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ।।३।। सच्चासत् ।।४।। यच्चान्यदसदस्तदसत् ।।५।। असदिति भूतप्रत्यक्षाभावाद् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ।।६।। तथाऽभावे भावप्रत्यक्षत्वाच्च ।।७।। एतेनाघटोऽगौरधर्मश्च व्याख्यातः ।।८।। अभूतं नास्तीत्यनर्थान्तरम् ।।६।। नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः ।।१०।। आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ।।११।। तथा द्रव्यान्तरेषु प्रत्यक्षम् ।।१२।। असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च ।।१३।। तत्समवायात् कर्मगुणेषु ।।१४।। आत्मसमवायादात्मगुणेषु ।।१५।।

।। इति नवमाध्याये प्रथममाह्निकम् ।।

## अथ नवमाध्याये द्वितीयमाह्निकम्

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ।।१।। अस्येदं कार्य-कारणसम्बन्धश्चावयवाद्भवति ।।२।। एतेन शाब्दं व्याख्यातम् ।।३।। हेतुरपदेशो लिङ्गप्रमाणं करणमित्यनर्थान्तरम् ।।४।। अस्येदमिति बुद्ध्यपेक्षितत्वात् ।।५।। आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ।।६।। तथा स्वप्नः ।।७।। स्वप्नान्तिकम् ।।८।। धर्माच्च ।।६।। इन्द्रियदोषात् संस्कारदोषाच्चाविद्या

।।१०।। तद् दुष्टज्ञानम् ।।११।। अदुष्टं विद्या ।।१२।। आर्षं सिद्धदर्शनं च धर्मेभ्यः ।।१३।।

।। इति नवमाध्याये द्वितीयमाह्निकम् ।।

## अथ दशमाध्याये प्रथममाह्निकम्

इष्टानिष्टकारणविशेषाद् विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ।।१।। संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ।।२।। तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ।।३।। अभूदित्यपि ।।४।। सति च कार्यादर्शनात् ।।५।। एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ।।६।। एकदेश इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ।।७।।

।। इति दशमाध्याये प्रथममाह्निकम् ।।

## अथ दशमाध्याये द्वितीयमाह्निकम्

कारणमिति द्रव्ये कार्यसमवायात् ।।१।। संयोगाद्वा ।।२।। कारणे समवायात् कर्माणि ।।३।। तथा रूपे कारणैकार्थसमवायाच्च ।।४।। कारणसमवायात् संयोगः पटस्य ।।५।। कारणकारणसमवायाच्च ।।६।। संयुक्तसमवायादग्नेर्वैशेषिकम् ।।७।। दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ।।८।। तद्वचनादाम्नायस्य प्रामाण्यमिति ।।९।।

।। इति दशमाध्याये द्वितीयमाह्निकम् ।।

।। समाप्तं चेदं वैशेषिकदर्शनम् ।।

# अथ साङ्ख्यदर्शनम्

## प्रथमोऽध्यायः

अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ।।१।। न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात् ।।२।। प्रात्यहिकक्षुत्प्रतिकारवत् तत्प्रतिकारचेष्टनात् पुरुषार्थत्वम् ।।३।। सर्वासम्भवात् सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः ।।४।। उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ।।५।। अविशेषश्चोभयोः ।।६।। न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ।।७।। स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ।।८।। नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ।।६।। शुक्लपटवद् बीजवच्चेत् ।।१०।। शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ।।११।। न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ।।१२।। न देशयोगतोऽप्यस्मात् ।।१३।। नावस्थातो देहधर्मत्वात् तस्याः ।।१४।। असङ्गोऽयं पुरुष इति ।।१५।। न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च ।।१६।। विचित्रभोगानुपपत्तिरन्यधर्मत्वे ।।१७।। प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम् ।।१८।। न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ।।१६।। तद्योगोऽप्यविवेकान्न समानत्वम् ।।२०।। नियतकारणात्तदुच्छित्तिर्ध्वान्तवत् ।।२१।। प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ।।२२।। वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः ।।२३।। युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ।।२४।। अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेः ।।२५।। सत्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ।।२६।। स्थूलात् पञ्चतन्मात्रस्य ।।२७।। बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ।।२८।। तेनान्तःकरणस्य ।।२६।। ततः प्रकृतेः ।।३०।। संहतपरार्थत्वात् पुरुषस्य ।।३१।। मूले मूलाभावादमूलं मूलम् ।।३२।। पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ।।३३।। समानः प्रकृतेर्द्वयोः ।।३४।। अधिकारित्रैविध्यान्न नियमः ।।३५।। महदाख्यमाद्यं कार्यं तन्मनः ।।३६।। चरमोऽहङ्कारः ।।३७।। तत्कार्यत्वमन्येषाम् ।।३८।। आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ।।३६।। पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ।।४०।। परिच्छिन्नं न सर्वोपादानम् ।।४१।। तदुत्पत्तिश्रुतेश्च ।।४२।। नावस्तुनो वस्तुसिद्धिः ।।४३।। अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ।।४४।। भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तरां तत्सिद्धिः ।।४५।। न कर्मण उपादानत्वायोगात् ।।४६।। नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ।।४७।। तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ।।४८।। दुःखद्दुःखं जलाभिषेकवन्न जाड्यविमोकः ।।४६।। काम्येऽकाम्येऽपि साध्यत्वाविशेषात् ।।५०।। निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ।।५१।। द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिछित्तिः प्रमा तत्साधकतमं यत्तत् त्रिविधं प्रमाणम् ।।५२।। तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ।।५३।। यत्सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ।।५४।। योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ।।५५।। लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः ।।५६।। ईश्वरासिद्धेः ।।५७।। मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ।।५८।। उभयथाप्यसत्करत्वम् ।।५६।। मुक्तात्मनः प्रशंसोपासानासिद्धस्य वा ।।६०।। तत्सन्निधानादधिष्ठातृत्वं मणिवत् ।।६१।। विशेषकार्येष्वपि जीवानाम् ।।६२।। सिद्धरूपबोद्धृत्वाद् वाक्यार्थोपदेशः ।।६३।। अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ।।६४।। प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ।।६५।। आप्तोपदेशः शब्दः ।।६६।। उभयसिद्धिः प्रमाणात् तदुपदेशः ।।६७।। सामान्यतोदृष्टादुभयसिद्धिः ।।६८।। चिदवसानो भोगः ।।६६।। अकर्त्तुरपि फलोपभोगोऽन्नाद्यवत् ।।७०।। अविवेकाद्वा तत्सिद्धेः कर्त्तुः फलावगमः ।।७१।। नोभयं च तत्वाख्याने ।।७२।। विषयोऽविषयोऽ-

प्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ।।७३।। सौक्ष्म्यात्तदनुपलब्धिः ।।७४।। कार्यदर्शनात्तदुपलब्धेः ।।७५।। वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ।।७६।। तथाप्येकतरदृष्ट्या एकतरसिद्धेर्नापलापः ।।७७।। त्रिविधविरोधापत्तेश्च ।।७८।। नासदुत्पादो नृशृङ्गवत् ।।७९।। उपादाननियमात् ।।८०।। सर्वत्र सर्वदा सर्वासम्भवात् ।।८१।। शक्तस्य शक्यकारणात् ।।८२।। कारणाभावाच्च ।।८३।। न भावे भावयोगश्चेत् ।।८४।। न, अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ।।८५।। नाशः कारणलयः ।।८६।। पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवत् ।।८७।। उत्पत्तिवद्वाऽदोषः ।।८८।। हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।।८९।। आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ।।९०।। त्रिगुणाचेतनत्वादि द्वयोः ।।९१।। प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् ।।९२।। लध्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम् ।।९३।। उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् ।।९४।। परिमाणात् ।।९५।। समन्वयात् ।।९६।। शक्तितश्चेति ।।९७।। तद्धाने प्रकृतिः पुरुषो वा ।।९८।। तयोरन्यत्वे तुच्छत्वम् ।।९९।। कार्यात् कारणानुमानं तत्साहित्यात् ।।१००।। अव्यक्तं त्रिगुणाल्लिङ्गात् ।।१०१।। तत्कार्यतस्तत्सिद्धेर्नापलापः ।।१०२।। सामान्येन विवादाभावाद्धर्मवन्न साधनम् ।।१०३।। शरीरादिव्यतिरिक्तः पुमान् ।।१०४।। संहतपरार्थत्वात् ।।१०५।। त्रिगुणादिविपर्ययात् ।।१०६।। अधिष्ठानाच्चेति ।।१०७।। भोक्तृभावात् ।।१०८।। कैवल्यार्थं प्रवृत्तेश्च ।।१०९।। पुरुष जडप्रकाशायोगात् प्रकाशः ।।११०।। निर्गुणत्वान्न चिद्धर्मा ।।१११।। श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ।।११२।। सुषुप्त्याद्यस्यसाक्षित्वम् ।।११३।। जन्मादिव्यवस्थातः पुरुषबहुत्वम् ।।११४।। उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः ।।११५।। उपाधिर्भिद्यते न तु तद्वान् ।।११६।। एवमेकत्वेन परिवर्त्तमानस्य न विरुद्धधर्माध्यासः ।।११७।। अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात् ।।११८।। नाद्वैतश्रुतिविरोधो जातिपरत्वात् ।।११९।। विदितबन्धकारणस्य दृष्ट्या तद्रूपम् ।।१२०।। नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ।।१२१।। वामदेवादिर्मुक्तो नाद्वैतम् ।।१२२।। अनादावद्य यावदभावाद् भविष्यदप्येवम् ।।१२३।। इदानीमिव सर्वत्र नात्यन्तोच्छेदः ।।१२४।। व्यावृत्तोभयरूपः ।।१२५।। साक्षात्सम्बन्धात् साक्षित्वम् ।।१२६।। नित्यमुक्तत्वम् ।।१२७।। औदासीन्यं चेति ।।१२८।। उपरागात्कर्त्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् ।।१२९।।

।। इति प्रथमोऽध्यायः ।।

## अथ द्वितीयोऽध्यायः

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ।।१।। विरक्तस्य तत्सिद्धेः ।।२।। न श्रवणमात्रात्तसिद्धिरनादिवासनाया बलवत्वात् ।।३।। बहुभृत्यवद् वा प्रत्येकम् ।।४।। प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ।।५।। कार्यतस्तत्सिद्धेः ।।६।। चेतनोद्देशान्नियमः कण्टकमोक्षवत् ।।७।। अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ।।८।। रागविरागयोर्योगः सृष्टिः ।।९।। महदादिक्रमेण पञ्चभूतानाम् ।।१०।। आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः ।।११।। दिक्कालावाकाशादिभ्यः ।।१२।। अध्यवसायो बुद्धिः ।।१३।। तत्कार्यं धर्मादि ।।१४।। महदुपरागाद् विपरीतम् ।।१५।। अभिमानोऽहङ्कारः ।।१६।। एकादशपञ्चतन्मात्रं तत्कार्यम् ।।१७।। सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात् ।।१८।। कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ।।१९।। आहङ्कारिकत्वश्रुतेर्न भौतिकानि ।।२०।। देवतालयश्रुतिर्नारम्भकस्य ।।२१।। तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च ।।२२।। अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठाने ।।२३।। शक्तिभेदेऽपि

भेदसिद्धौ नैकत्वम् ।।२४।। न कल्पनाविरोधः प्रमाणदृष्टस्य ।।२५।। उभयात्मकं मनः ।।२६।। गुणपरिणामभेदान्नानात्वमवस्थावत् ।।२७।। रूपादिरसमलान्त उभयोः ।।२८।। द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ।।२९।। त्रयाणां स्वालक्षण्यम् ।।३०।। सामान्याकरणवृत्तिः प्राणाद्या वायवः पञ्च ।।३१।। क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ।।३२।। वृत्तयः पञ्चतयः क्लिष्टाऽक्लिष्टाः ।।३३।। तन्निवृत्तावुपशान्तोपरागः स्वस्थः ।।३४।। कुसुमवच्च मणिः ।।३५।। पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ।।३६।। धेनुवद्वत्साय ।।३७।। करणं त्रयोदशविधमवान्तरभेदात् ।।३८।। इन्द्रियेषु साधकतमत्वयोगात् कुठारवत् ।।३९।। द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु ।।४०।। अव्यभिचारात् ।।४१।। तथाऽशेषसंस्काराधारत्वात् ।।४२।। स्मृत्यानुमानाच्च ।।४३।। सम्भवेन्न स्वतः ।।४४।। आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ।।४५।। तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत् ।।४६।। समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ।।४७।।

।।इति द्वितीयोऽध्यायः ।।

## अथ तृतीयोऽध्यायः

अविशेषाद् विशेषारम्भः ।।१।। तस्माच्छरीरस्य ।।२।। तद्बीजात् संसृतिः ।।३।। आविवेकाच्च प्रवर्तनमविशेषाणाम् ।।४।। उपभोगादितरस्य ।।५।। सम्प्रति परिमुक्तो द्वाभ्याम् ।।६।। मातापितृजं स्थूलं प्रायशः इतरन्न तथा ।।७।। पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ।।८।। सप्तदशैकं लिङ्गम् ।।९।। व्यक्तिभेदः कर्मविशेषात् ।।१०।। तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ।।११।। न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ।।१२।। मूर्त्तत्वेऽपि न सङ्घातयोगात् तरणिवत् ।।१३।। अणुपरिमाणं तत् कृतिश्रुतेः ।।१४।। तदन्नमयत्वश्रुतेश्च ।।१५।। पुरुषार्थं संसृतिलिङ्गानां सूपकारवद्राज्ञः ।।१६।। पाञ्चभौतिको देहः ।।१७।। चातुर्भौतिकमित्येके ।।१८।। एकभौतिकमित्यपरे ।।१९।। न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ।।२०।। प्रपञ्चमरणाद्यभावश्च ।।२१।। मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सौक्ष्म्यात् सांहत्ये तदुद्भवः ।।२२।। ज्ञानान्मुक्तिः ।।२३।। बन्धो विपर्ययात् ।।२४।। नियतकारणत्वान्न समुच्चयविकल्पौ ।।२५।। स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ।।२६।। इतरस्यापि नात्यन्तिकम् ।।२७।। सङ्कल्पितेऽप्येवम् ।।२८।। भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ।।२९।। रागोपहतिर्ध्यानम् ।।३०।। वृत्तिनिरोधात् तत्सिद्धिः ।।३१।। धारणासनस्वकर्मणा तत्सिद्धिः ।।३२।। निरोधश्छर्दिविधारणाभ्याम् ।।३३।। स्थिरसुखमासनम् ।।३४।। स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ।।३५।। वैराग्यादभ्यासाच्च ।।३६।। विपर्ययभेदाः पञ्च ।।३७।। अशक्तिरष्टाविंशतिधा तु ।।३८।। तुष्टिर्नवधा ।।३९।। सिद्धिरष्टधा ।।४०।। अवान्तरभेदाः पूर्ववत् ।।४१।। एवमितरस्याः ।।४२।। आध्यात्मिकादिभेदान्नवधा तुष्टिः ।।४३।। ऊहादिभिः सिद्धिरष्टधा ।।४४।। नेतरादितरहानेन विना ।।४५।। दैवादिप्रभेदा ।।४६।। आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिराविवेकात् ।।४७।। ऊर्ध्वं सत्त्वविशाला ।।४८।। तमोविशाला मूलतः ।।४९।। मध्ये रजोविशाला ।।५०।। कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ।।५१।। आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः ।।५२।। समानं जरामरणादिजं दुःखम् ।।५३।। न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ।।५४।। अकार्यत्वेऽपि तद्योगः पारवश्यात् ।।५५।। स हि सर्ववित् सर्वकर्त्ता ।।५६।। ईदृशेश्वरसिद्धिः सिद्धा ।।५७।। प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वात् उष्ट्रकुङ्कुमवहनवत् ।।५८।। अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ।।५९।।

कर्मवद् दृष्टेर्वा कालादेः ।।६०।। स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ।।६१।। कर्माकृष्टेर्वानादितः ।।६२।। विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ।।६३।। इतर इतरवत्तद्दोषात् ।।६४।। द्वयोरेकतरस्य वौदासीन्यमपवर्गः ।।६५।। अन्यसृष्ट्युपरागेऽपि न विरज्यते प्रबुद्धरज्जु तत्वस्येवोरगः ।।६६।। कर्मनिमित्तयोगाच्च ।।६७।। नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ।।६८।। नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात् ।।६९।। दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ।।७०।। नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ।।७१।। प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ।।७२।। रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद् विमोचयत्येकेन रूपेण ।।७३।। निमित्तत्वमविवेकस्येति न दृष्टिहानिः ।।७४।। तत्त्वाभ्यासान्नेति नेतीति त्यागाद् विवेकसिद्धिः ।।७५।। अधिकारिप्रभेदान्न नियमः ।।७६।। बाधितानुवृत्या मध्यविवेकतोऽप्युपभोगः ।।७७।। जीवन्मुक्तश्च ।।७८।। उपदेश्योपदेष्टृत्वात् तत्सिद्धिः ।।७९।। श्रुतिश्च ।।८०।। इतरथाऽन्धपरम्परा ।।८१।। चक्रभ्रमणवद् धृतशरीरः ।।८२।। संस्कारलेशतस्तत्सिद्धिः ।।८३।। विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता नेतरान्नेतरात् ।।८४।।

।। इति तृतीयोऽध्यायः ।।

## अथ चतुर्थोऽध्यायः

राजपुत्रवत् तत्वोपदेशात् ।।१।। पिशाचवदन्यार्थोपदेशेऽपि ।।२।। आवृत्तिरसकृदुपदेशात् ।।३।। पितापुत्रवदुभयोर्दृष्टत्वात् ।।४।। श्येनवत् सुखदुःखी त्यागवियोगाभ्याम् ।।५।। अहिर्निर्ल्वयिनीवत् ।।६।। छिन्नहस्तवद्वा ।।७।। असाधनानुचिन्तनं बन्धाय भरतवत् ।।८।। बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत् ।।९।। द्वाभ्यामपि तथैव ।।१०।। निराशः सुखी पिङ्गलावत् ।।११।। अनारम्भेऽपि परगृहे सुखी सर्पवत् ।।१२।। बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ।।१३।। इषुकारवन्नैकचित्तस्य समाधिहानिः ।।१४।। कृतनियमलङ्घनादानर्थक्यं लोकवत् ।।१५।। तद्विस्मरणेऽपि भेकीवत् ।।१६।। नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत् ।।१७।। दृष्टस्तयोरिन्द्रस्य ।।१८।। प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात् तद्वत् ।।१९।। न कालनियमो वामदेववत् ।।२०।। अध्यस्तरूपोपासनात् पारम्पर्येण यज्ञोपासकानामिव ।।२१।। इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ।।२२।। विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ।।२३।। लब्धातिशययोगात् तद्वत् ।।२४।। न कामचारित्वं रागोपहते ।।२५।। गुणयोगाद् बन्धः शुकवत् ।।२६।। न भोगाद्रागशान्तिर्मुनिवत् ।।२७।। दोषदर्शनादुभयोः ।।२८।। न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ।।२९।। नाभासमात्रमपि मलिनदर्पणवत् ।।३०।। न तज्जस्यापि तद्रूपता पङ्कजवत् ।।३१।। न भूतियोगेऽपि कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ।।३२।।

।। इति चतुर्थोऽध्यायः ।।

# अथ पञ्चमोऽध्यायः

मङ्गलाचरणं शिष्टाचारात् फलदर्शनाच्छ्रुतितश्चेति ।।१।। नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः ।।२।। स्वोपकारादधिष्ठानं लोकवत् ।।३।। लौकिकेश्वरवदितरथा ।।४।। पारिभाषिको वा ।।५।। न, रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ।।६।। तद्योगेऽपि न नित्यमुक्तः ।।७।। प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ।।८।। सत्तामात्राच्चेत् सर्वैश्वर्यम् ।।६।। प्रमाणाभावान्न तत्सिद्धिः ।।१०।। सम्बन्धाभावान्नानुमानम् ।।११।। श्रुतिरपि प्रधानकार्यत्वस्य ।।१२।। नाविद्याशक्तियोगो निःसङ्गस्य ।।१३।। तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ।।१४।। न बीजाङ्कुरवत् सादिसंसारश्रुतेः ।।१५।। विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः ।।१६।। अबाधे नैष्फल्यम् ।।१७।। विद्याबाध्यत्वे जगतोऽप्येवम् ।।१८।। तद्रूपत्वे सादित्वम् ।।१६।। न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ।।२०।। श्रुतिलिङ्गादिभिस्तत्सिद्धिः ।।२१।। न नियमः प्रमाणान्तरावकाशात् ।।२२।। उभयत्राप्येवम् ।।२३।। अर्थात् सिद्धिश्चेत् समानमुभयोः ।।२४।। अन्तःकरणधर्मत्वं धर्मादीनाम् ।।२५।। गुणादीनाञ्च नात्यन्तबाधः ।।२६।। पञ्चावयवयोगात् सुखसंवित्तिः ।।२७।। न सकृद्ग्रहणात् सम्बन्धसिद्धिः ।।२८।। नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ।।२६।। न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ।।३०।। निजशक्त्युद्भवमित्याचार्याः ।।३१।। आधेयशक्तियोग इति पञ्चशिखः ।।३२।। न स्वरूपशक्तिर्नियमः पुनर्वादप्रसक्तेः ।।३३।। विशेषणानर्थक्यप्रसक्तेः ।।३४।। पल्लवादिष्वनुपपत्तेश्च ।।३५।। आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ।।३६।। वाच्यवाचकभावः सम्बन्धः शब्दार्थयोः ।।३७।। त्रिभिः सम्बन्धसिद्धिः ।।३८।। न कार्ये नियम उभयथादर्शनात् ।।३६।। लोके व्युत्पन्नस्य वेदार्थप्रतीतिः ।।४०।। न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ।।४१।। न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ।।४२।। निजशक्तिर्व्युत्पत्या व्यवच्छिद्यते ।।४३।। योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ।।४४।। न नित्यत्वं वेदानां कार्यत्वश्रुतेः ।।४५।। न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ।।४६।। न मुक्तामुक्तयोरयोग्यत्वात् ।।४७।। नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ।।४८।। तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ।।४६।। यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम् ।।५०।। निजशक्त्यभिव्यक्तेः स्वतःप्रामाण्यम् ।।५१।। नासतः ख्यानं नृशृङ्गवत् ।।५२।। न सतो बाधदर्शनात् ।।५३।। नानिर्वचनीयस्य तदभावात् ।।५४।। नान्यथाख्यातिः स्ववचोव्याघातात् ।।५५।। सदसत्ख्यातिर्बाधाबाधात् ।।५६।। नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ।।५७।। नानात्मनाऽपि प्रत्यक्षबाधात् ।।५८।। नोभाभ्यां तेनैव ।।५६।। अन्यपरत्वमविवेकानां तत्र ।।६०।। नात्माऽविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् ।।६१।। नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ।।६२।। दुःखनिवृत्तेर्गौणः ।।६३।। विमुक्तिप्रशंसा मन्दानाम् ।।६४।। न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा वास्यादिवच्चक्षुरादिवत् ।।६५।। सक्रियत्वाद् गतिश्रुतेः ।।६६।। न निर्भागत्वं तद्योगाद् घटादिवत् ।।६७।। प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम् ।।६८।। न भागलाभो भोगिनो निर्भागत्वश्रुतेः ।।६६।। नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मकत्वात् ।।७०।। न विशेषगुणोच्छित्तिस्तद्वत् ।।७१।। न विशेषगतिर्निष्क्रियस्य ।।७२।। नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ।।७३।। न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ।।७४।। न देशादिलाभोऽपि ।।७५।। न भागियोगो भागस्य ।।७६।। नाणिमादियोगोऽप्यवश्यंभावित्वात् तदुच्छित्तेरितरयोगवत् ।।७७।। नेन्द्रादिपदयोगोऽपि तद्वत् ।।७८।। समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ।।७६।। द्वयोः सबीजमन्यत्र तद्धतिः ।।८०।। द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ ।।८१।। वासनयानार्थख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ।।८२।। न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ।।८३।। त्रिधा त्रयाणां व्यवस्था कर्म

देहोपभोगदेहोभयदेहाः ।।८४।। न किञ्चिदप्यनुशयिनः ।।८५।। न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ।।८६।। आश्रयासिद्धेश्च ।।८७।। योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ।।८८।। न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्येऽपि च सांहत्येऽपि च ।।८९।।

।। इति पञ्चमोऽध्यायः ।।

## अथ षष्टोऽध्याय

अस्त्यात्मा नास्तित्वसाधनाभावात् ।।१।। देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ।।२।। षष्ठीव्यपदेशादपि ।।३।। न शिलापुत्रवद्धर्मिग्राहकमानबाधात् ।।४।। अत्यन्तदुःखनिवृत्या कृतकृत्यता ।।५।। यथा दुःखात् क्लेशः पुरुषस्य न तथा सुखादभिलाषः ।।६।। न कुत्रापि कोऽपि सुखीति ।।७।। तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः ।।८।। सुखलाभाभावादपुरुषार्थत्वमिति चेन्न, द्वैविध्यात् ।।९।। निर्गुणत्वमात्मनोऽसङ्गत्वादि-श्रुतेः ।।१०।। परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ।।११।। अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ।।१२।। न नित्यः स्यादात्मवदन्यथाऽनुच्छित्तिः ।।१३।। प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ।।१४।। अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ।।१५।। प्रकारान्तरासम्भवादविवेक एव बन्धः ।।१६।। न मुक्तस्य पुनर्बन्धयोगोऽप्यानावृत्तिश्रुतेः ।।१७।। अपुरुषार्थत्वमन्यथा ।।१८।। अविशेषापत्तिरुभयोः ।।१९।। मुक्तिरन्तराय-ध्वस्तेर्न परः ।।२०।। तत्राप्यविरोधः ।।२१।। अधिकारित्रैविध्यान्न नियमः ।।२२।। दार्ढ्यार्थमुत्तरेषाम् ।।२३।। स्थिरसुखमासनमिति न नियमः ।।२४।। ध्यानं निर्विषयं मनः ।।२५।। उभयथाऽप्यविशेष-श्चेन्नैवमुपरागनिरोधाद्विशेषः ।।२६।। निःसङ्गेऽप्युपरागोऽविवेकात् ।।२७।। जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः ।।२८।। ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ।।२९।। लयविक्षेपयोर्व्यावृत्येत्याचार्याः ।।३०।। न स्थाननियमश्चित्तप्रसादात् ।।३१।। प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ।।३२।। नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ।।३३।। श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ।।३४।। पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ।।३५।। सर्वत्र कार्यदर्शनाद् विभुत्वम् ।।३६।। गतियोगेऽप्याद्यकारणताहानिरणुवत् ।।३७।। प्रसिद्धाधिक्यं प्रधानस्य न नियमः ।।३८।। सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ।।३९।। अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ।।४०।। कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ।।४१।। साम्यवैषम्याभ्यां कार्यद्वयम् ।।४२।। विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ।।४३।। नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ।।४४।। पुरुषबहुत्वं व्यवस्थातः ।।४५।। उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम् ।।४६।। द्वाभ्यामपि प्रमाणविरोधः ।।४७।। द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ।।४८।। प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ।।४९।। जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः ।।५०।। न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ।।५१।। जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात् ।।५२।। प्रकारान्तरासम्भवात् सदुत्पत्तिः ।।५३।। अहङ्कारः कर्त्ता न पुरुषः ।।५४।। चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात् ।।५५।। चन्द्रादिलोकेऽप्यावृत्तिर्निमित्त-सद्भावात् ।।५६।। लोकस्य नोपदेशात् सिद्धिः पूर्ववत् ।।५७।। पारम्पर्येण तत्सिद्धौ विमुक्तश्रुतिः ।।५८।। गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद् भोगदेशकाललाभो व्योमवत् ।।५९।। अनधिष्ठितस्य पूतिभावप्रसङ्गान्न तत्सिद्धिः ।।६०।। अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ।।६१।। निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ।।६२।। विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ।।६३।। अहङ्कारकर्त्रधीनाः

कार्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ।।६४।। अदृष्टोद्भूतिवत् समानत्वम् ।।६५।। महतोऽन्यत् ।।६६।। कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ।।६७।। अविवेकानिमित्तो वा पञ्चशिखः ।।६८।। लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ।।६९।। यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ।।७०।।

।। इति षष्ठोऽध्यायः ।।

।। समाप्तं चेदं सांख्यदर्शनम् ।।

# योगदर्शनम्

## अथ प्रथमः समाधिपादः

अथ योगानुशासनम् ।।१।। योगश्चित्तवृत्तिनिरोधः ।।२।। तदा द्रष्टुः स्वरूपेऽवस्थानम् ।।३।। वृत्तिसारूप्यमितरत्र ।।४।। वृत्तयः पञ्चतयः क्लिष्टाक्लिष्टाः ।।५।। प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ।।६।। प्रत्यक्षानुमानागमाः प्रमाणानि ।।७।। विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ।।८।। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ।।९।। अभावप्रत्ययालम्बना वृत्तिर्निद्रा ।।१०।। अनुभूतविषयाऽसम्प्रमोषः स्मृतिः ।।११।। अभ्यासवैराग्याभ्यां तन्निरोधः ।।१२।। तत्र स्थितौ यत्नोऽभ्यासः ।।१३।। स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ।।१४।। दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ।।१५।। तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ।।१६।। वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ।।१७।। विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ।।१८।। भवप्रत्ययो विदेहप्रकृतिलयानाम् ।।१९।। श्रद्धा-वीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ।।२०।। तीव्रसंवेगानामासन्नः ।।२१।। मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ।।२२।। ईश्वरप्रणिधानाद्वा ।।२३।। क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ।।२४।। तत्र निरतिशयं सर्वज्ञबीजम् ।।२५।। स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।।२६।। तस्य वाचकः प्रणवः ।।२७।। तज्जपस्तदर्थभावनम् ।।२८।। ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ।।२९।। व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ।।३०।। दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ।।३१।। तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ।।३२।। मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ।।३३।। प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ।।३४।। विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ।।३५।। विशोका वा ज्योतिष्मती ।।३६।। वीतरागविषयं वा चित्तम् ।।३७।। स्वप्ननिद्राज्ञानालम्बनं वा ।।३८।। यथाभिमतध्यानाद्वा ।।३९।। परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ।।४०।। क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता-समापत्तिः ।।४१।। तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ।।४२।। स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ।।४३।। एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ।।४४।। सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ।।४५।। ता एव सबीजः समाधिः ।।४६।। निर्विचारवैशारद्येऽध्यात्मप्रसादः ।।४७।। ऋतम्भरा तत्र प्रज्ञा ।।४८।। श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ।।४९।। तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ।।५०।। तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ।।५१।।

।। इति प्रथमः समाधिपादः ।।

## अथ द्वितीयः साधनपादः

तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ।।१।। समाधिभावनार्थः क्लेशतनूकरणार्थश्च ।।२।। अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ।।३।। अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ।।४।। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ।।५।। दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ।।६।।

सुखानुशयी रागः ।।७।। दुःखानुशयी द्वेषः ।।८।। स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ।।९।। ते प्रतिप्रसवहेयाः सूक्ष्माः ।।१०।। ध्यानहेयास्तद्वृत्तयः ।।११।। क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ।।१२।। सति मूले तद्विपाको जात्यायुर्भोगाः ।।१३।। ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ।।१४।। परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ।।१५।। हेयं दुःखमनागतम् ।।१६।। द्रष्ट्रीदृश्ययोः संयोगो हेयहेतुः ।।१७।। प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ।।१८।। विशेषाऽविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ।।१९।। द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ।।२०।। तदर्थ एव दृश्यस्यात्मा ।।२१।। कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ।।२२।। स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ।।२३।। तस्य हेतुरविद्या ।।२४।। तदभावात्संयोगाभावो हानं तद् दृशेः कैवल्यम् ।।२५।। विवेकख्यातिरविप्लवा हानोपायः ।।२६।। तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ।।२७।। योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ।।२८।। यमनियमासनप्राणायामप्रत्याहारधारणा-ध्यानसमाधयोऽष्टावङ्गानि ।।२९।। अहिंसा सत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ।।३०।। जाति-देशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ।।३१।। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ।।३२।। वितर्कबाधने प्रतिपक्षभावनम् ।।३३।। वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ।।३४।। अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ।।३५।। सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ।।३६।। अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ।।३७।। ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ।।३८।। अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ।।३९।। शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ।।४०।। सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ।।४१।। सन्तोषादनुत्तमः सुखलाभः ।।४२।। कायेन्द्रियसिद्धिरशुद्धिक्षयात् तपसः ।।४३।। स्वाध्यायादिष्टदेवतासम्प्रयोगः ।।४४।। समाधिसिद्धिरीश्वरप्रणिधानात् ।।४५।। स्थिरसुखमासनम् ।।४६।। प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ।।४७।। ततो द्वन्द्वानभिघातः ।।४८।। तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ।।४९।। बाह्याभ्यन्तर-स्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ।।५०।। बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ।।५१।। ततः क्षीयते प्रकाशावरणम् ।।५२।। धारणासु च योग्यता मनसः ।।५३।। स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ।।५४।। ततः परमा वश्यतेन्द्रियाणाम् ।।५५।।

।। इति द्वितीयः साधनपादः ।।

# अथ तृतीयो विभूतिपादः

देशबन्धश्चित्तस्य धारणा ।।१।। तत्र प्रत्ययैकतानता ध्यानम् ।।२।। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ।।३।। त्रयमेकत्र संयमः ।।४।। तज्जयात्प्रज्ञाऽलोकः ।।५।। तस्य भूमिषु विनियोगः ।।६।। त्रयमन्तरङ्गं पूर्वेभ्यः ।।७।। तदपि बहिरङ्गं निर्बीजस्य ।।८।। व्युत्थान- निरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ।।९।। तस्य प्रशान्तवाहिता संस्कारात् ।।१०।। सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ।।११।। ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ।।१२।। एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ।।१३।। शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ।।१४।। क्रमान्यत्वं परिणामान्यत्वे हेतुः ।।१५।। परिणामत्रयसंयमादतीतानागतज्ञानम् ।।१६।।

शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ।।१७।। संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् ।।१८।। प्रत्ययस्य परचित्तज्ञानम् ।।१९।। कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासम्प्रयोगेऽन्तर्धानम् ।।२०।। सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ।।२१।। मैत्र्यादिषु बलानि ।।२२।। बलेषु हस्तिबलादीनि ।।२३।। प्रवत्यालोकन्यासात्सूक्ष्म-व्यवहितविप्रकृष्टज्ञानम् ।।२४।। भुवनज्ञानं सूर्ये संयमात् ।।२५।। चन्द्रे ताराव्यूहज्ञानम् ।।२६।। ध्रुवे तद्गतिज्ञानम् ।।२७।। नाभिचक्रे कायव्यूहज्ञानम् ।।२८।। कण्ठकूपे क्षुत्पिपासानिवृत्तिः ।।२९।। कूर्मनाड्यां स्थैर्यम् ।।३०।। मूर्धज्योतिषि सिद्धदर्शनम् ।।३१।। प्रातिभाद्वा सर्वम् ।।३२।। हृदये चित्तसंवित् ।।३३।। सत्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्वात् स्वार्थसंयमात्पुरुषज्ञानम् ।।३४।। ततः प्रातिभश्रावणवेदनाऽऽदर्शास्वादवार्ता जायन्ते ।।३५।। ते समाधावुपसर्गा व्युत्थाने सिद्धयः ।।३६।। बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ।।३७।। उदानजयाज्जलपङ्कण्टकादिष्वसङ्ग उत्क्रान्तिश्च ।।३८।। समानजयाज्ज्वलनम् ।।३९।। श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम् ।।४०।। कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ।।४१।। बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ।।४२।। स्थूलस्वरूपसूक्ष्मान्वयार्थवत्वसंयमाद् भूतजयः ।।४३।। ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ।।४४।। रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ।।४५।। ग्रहणस्वरूपाऽस्मितान्वयार्थवत्वसंयमादिन्द्रियजयः ।।४६।। ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ।।४७।। सत्त्वपुरुषान्यथाख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ।।४८।। तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ।।४९।। स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ।।५०।। क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम् ।।५१।। जातिलक्षणदेशैरन्यतानवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः ।।५२।। तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ।।५३।। सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ।।५४।।

।। इति तृतीयो विभूतिपादः ।।

## अथ चतुर्थः कैवल्यपादः

जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः ।।१।। जात्यन्तरपरिणामः प्रकृत्यापूरात् ।।२।। निमित्तम-प्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ।।३।। निर्माणचित्तान्यस्मितामात्रात् ।।४।। प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ।।५।। तत्र ध्यानजमनाशयम् ।।६।। कर्माशुक्लाकृष्णं योगिनस्त्रिविध-मितरेषाम् ।।७।। ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ।।८।। जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ।।९।। तासामनादित्वं चाऽऽशिषो नित्यत्वात् ।।१०।। हेतुफलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः ।।११।। अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ।।१२।। ते व्यक्तसूक्ष्मा गुणात्मानः ।।१३।। परिणामैकत्वाद्वस्तुतत्त्वम् ।।१४।। वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ।।१५।। न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ।।१६।। तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ।।१७।। सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ।।१८।। न तत्स्वाभासं दृश्यत्वात् ।।१९।। एकसमये चोभयानवधारणम् ।।२०।। चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ।।२१।। चित्तेरप्रतिसंक्रमाया-स्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ।।२२।। द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ।।२३।। तदसंख्येयवासनाभिश्चित्तमपि

परार्थं संहत्यकारित्वात् ।।२४।। विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ।।२५।। तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ।।२६।। तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ।।२७।। हानमेषां क्लेशवदुक्तम् ।।२८।। प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ।।२९।। ततः क्लेशकर्मनिवृत्तिः ।।३०।। तदा सर्वावरणमलापेतस्य ज्ञानस्याऽनन्त्याज्ज्ञेयमल्पम् ।।३१।। ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ।।३२।। क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ।।३३।। पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ।।३४।।

।। इति चतुर्थः कैवल्यपादः ।।

।। समाप्तं चेदं योगदर्शनम् ।।

# अथ मीमांसादर्शनम्

## प्रथमोऽध्यायः

### प्रथमः पादः

अथातो धर्मजिज्ञासा ।।१।। चोदनालक्षणोऽर्थो धर्मः ।।२।। तस्य निमित्तपरीष्टिः ।।३।। सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ।।४।। औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ।।५।। कर्मैके तत्र दर्शनात् ।।६।। अस्थानात् ।।७।। करोति शब्दात् ।।८।। सत्त्वान्तरे च यौगपद्यात् ।।९।। प्रकृतिविकृत्योश्च ।।१०।। वृद्धिश्च कर्तृभूम्नाऽस्य ।।११।। समं तु तत्र दर्शनम् ।।१२।। सतः परमदर्शनं विषयानागमात् ।।१३।। प्रयोगस्य परम् ।।१४।। आदित्यवद्यौगपद्यम् ।।१५।। वर्णान्तरमविकारः ।।१६।। नादवृद्धिपरा ।।१७।। नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ।।१८।। सर्वत्र यौगपद्यात् ।।१९।। संख्याभावात् ।।२०।। अनपेक्षत्वात् ।।२१।। प्रख्याभावाच्च योगस्य ।।२२।। लिङ्गदर्शनाच्च ।।२३।। उत्पत्तौ वाऽवचनास्स्युरर्थस्यातन्निमित्तत्वात् ।।२४।। तद्भूतानां क्रियार्थेन, समाम्नायोऽर्थस्य तन्निमित्तत्वात् ।।२५।। लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ।।२६।। वेदांश्चैके सन्निकर्ष पुरुषाख्याः ।।२७।। अनित्यदर्शनाच्च ।।२८।। उक्तं तु शब्दपूर्वत्वम् ।।२९।। आख्याः प्रवचनात् ।।३०।। परन्तु श्रुतिसामान्यमात्रम् ।।३१।। कृते वा विनियोगस्स्यात् कर्मणस्सम्बन्धात् ।।३२।।

।। इति पूर्वमीमांसादर्शने प्रथमाध्यायस्य प्रथमः पादः ।।

### द्वितीयः पादः

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ।।१।। शास्त्रदृष्टविरोधाच्च ।।२।। तथा फलाभावात् ।।३।। अन्यानर्थक्यात् ।।४।। अभागिप्रतिषेधाच्च ।।५।। अनित्यसंयोगात् ।।६।। विधीना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ।।७।। तुल्यं च साम्प्रदायिकम् ।।८।। अप्राप्ता चानुपपत्तिः, प्रयोगे हि विरोधस्स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ।।९।। गुणवादस्तु ।।१०।। रूपात्प्रायात् ।।११।। दूरभूयस्त्वात् ।।१२।। अपराधात्कर्त्तुश्च पुत्रदर्शनम् ।।१३।। आकालिकेप्सा ।।१४।। विद्याप्रशंसा ।।१५।। सर्वत्वमाधिकारिकम् ।।१६।। फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात् ।।१७।। अन्त्ययोर्यथोक्तम् ।।१८।। विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ।।१९।। लोकवदिति चेत् ।।२०।। न, पूर्वत्वात् ।।२१।। उक्तं तु वाक्यशेषत्वम् ।।२२।। विधिश्चानर्थकः क्वचित्तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ।।२३।। प्रकरणे सम्भवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ।।२४।। विधौ च वाक्यभेदः स्यात् ।।२५।। हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ।।२६।। स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ।।२७।। अर्थे स्तुतिरन्याय्येति चेत् ।।२८।। अर्थस्तु विधिशेषत्वाद्यथा लोके ।।२९।। यदि च

हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्थाविधीनां स्यात् ।।३०।। तदर्थशास्त्रात् ।।३१।। वाक्यनियमात् ।।३२।। बुद्धशास्त्रात् ।।३३।। अविद्यमानवचनात् ।।३४।। अचेतनेऽर्थबन्धनात् ।।३५।। अर्थविप्रतिषेधात् ।।३६।। स्वाध्यायवद्वचनात् ।।३७।। अविज्ञेयात् ।।३८।। अनित्य- संयोगान्मन्त्रानर्थक्यम् ।।३९।। अविशिष्टस्तु वाक्यार्थः ।।४०।। गुणार्थेन पुनः श्रुतिः ।।४१।। परिसंख्या ।।४२।। अर्थवादो वा ।।४३।। अविरुद्धं परम् ।।४४।। सम्प्रैषे कर्मगर्हानुपलम्भः संस्कारत्वात् ।।४५।। अभिधानेऽर्थवादः ।।४६।। गुणादप्रतिषेधः स्यात् ।।४७।। विद्यावचनमसंयोगात् ।।४८।। सतः परमविज्ञानम् ।।४९।। उक्तश्चाऽनित्यसंयोगः ।।५०।। लिङ्गोपदेशश्च तदर्थत्वात् ।।५१।। ऊहः ।।५२।। विधिशब्दाश्च ।।५३।।

।। इति पूर्वमीमांसादर्शने प्रथमाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ।।१।। अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् ।।२।। विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ।।३।। हेतुदर्शनाच्च ।।४।। शिष्टाकोपेऽविरुद्धमिति चेत् ।।५।। न शास्त्रपरिमाणत्वात् ।।६।। अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।।७।। तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ।।८।। शास्त्रस्था वा तन्निमित्तत्वात् ।।९।। चोदितं तुवा प्रतीयेताऽविरोधात् प्रमाणेन ।।१०।। प्रयोगशास्त्रमिति चेत् ।।११।। नाऽसन्नियमात् ।।१२।। अवाक्यशेषाच्च ।।१३।। सर्वत्र च प्रयोगात्सन्निधानशास्त्राच्च ।।१४।। अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात् ।।१५।। अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ।।१६।। दर्शनाद्विनियोगः स्यात् ।।१७।। लिङ्गाभावाच्च नित्यस्य ।।१८।। आख्या हि देशसंयोगात् ।।१९।। न स्याद्देशान्तरेष्विति चेत् ।।२०।। स्याद्योगाख्या हि माथुरवत् ।।२१।। कर्मधर्मो वा प्रवणवत् ।।२२।। तुल्यं तु कर्तृधर्मेण ।।२३।। प्रयोगोत्पत्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ।।२४।। शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ।।२५।। अन्यायश्चानेकशब्दत्वम् ।।२६।। तत्र तत्त्वमभियोगविशेषात्स्यात् ।।२७।। तदशक्तिश्चानुरूपत्वात् ।।२८।। एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ।।२९।। प्रयोगचोदनाभावादर्थैकत्वमविभागात् ।।३०।। अद्रव्यशब्दत्वात् ।।३१।। अन्यदर्शनाच्च ।।३२।। आकृतिस्तु क्रियार्थत्वात् ।।३३।। न क्रिया स्यादिति चेदर्थान्तरं विधानं न, द्रव्यमिति चेत् ।।३४।। तदर्थत्वात्प्रयोगस्याविभागः ।।३५।।

।। इति पूर्वमीमांसा दर्शने प्रथमाध्यायस्य तृतीयः पादः ।।

## चतुर्थः पादः

उक्तं समाम्नायैदमर्थ्यं, तस्मात्सर्वं तदर्थं स्यात् ।।१।। अपि वा नामधेयं स्याद्यदुत्पत्ताव-पूर्वमविधायकत्वात् ।।२।। यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ।।३।। तत्प्रख्यञ्चान्यशास्त्रम् ।।४।।

तद्व्यपदेशं च ।।५।। नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ।।६।। तुल्यत्वात् क्रिययोर्न ।।७।। ऐकशब्द्ये परार्थवत् ।।८।। तद्गुणास्तु विधीयेरन्न विभागाद्विधानार्थे, न चेदन्येन शिष्टाः ।।९।। बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ।।१०।। प्रोक्षणीष्वर्थसंयोगात् ।।११।। तथनिर्मन्थ्ये ।।१२।। वैश्वदेवे विकल्प इति चेत् ।।१३।। न वा प्रकरणात् प्रत्यक्षविधानाच्च, नहि प्रकरणं द्रव्यस्य ।।१४।। मिथश्चानर्थसम्बन्धः ।।१५।। परार्थत्वाद् गुणानाम् ।।१६।। पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ।।१७।। गुणस्य तु विधानार्थे, तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ।।१८।। तच्छेषो नोपपद्यते ।।१९।। अविभागाद्विधानार्थे स्तुत्यर्थे नोपपद्येरन् ।।२०।। कारणं स्यादिति चेत् ।।२१।। आनर्थक्यादकारणं; कर्त्तुर्हि कारणानि गुणार्थो हि विधीयते ।।२२।। तत्सिद्धिः ।।२३।। जातिः ।।२४।। सारूप्यात् ।।२५।। प्रशंसा ।।२६।। भूमा ।।२७।। लिङ्गसमवायात् ।।२८।। सन्दिग्धेषु वाक्यशेषात् ।।२९।। अर्थाद्वा कल्पनैकदेशत्वात् ।।३०।।

।। इति पूर्वमीमांसादर्शने प्रथमाध्यायस्य चतुर्थः पादः ।।

।। इति प्रथमोऽध्यायः ।।

# द्वितीयोऽध्यायः

## प्रथमः पादः

भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ।।१।। सर्वेषां भावोऽर्थ इति चेत् ।।२।। येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि; तस्मात् तेभ्यः पराकाङ्क्षाभूतत्वात्स्वे प्रयोगे ।।३।। येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते, तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य ।।४।। चोदना, पुनरारम्भः ।।५।। तानि द्वैधं गुणप्रधानभूतानि ।।६।। यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ।।७।। यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ।।८।। धर्ममात्रे तु कर्म स्यादनिवृत्तेः प्रयाजवत् ।।९।। तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात् ।।१०।। द्रव्योपदेश इति चेत् ।।११।। न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ।।१२।। स्तुतशस्त्रयोस्तु संस्कारो, याज्यावद्देवताभिधानत्वात् ।।१३।। अर्थेन त्वपकृष्येत, देवतानामचोदनार्थस्य गुणभूतत्वात् ।।१४।। वशावद्वाऽगुणार्थं स्यात् ।।१५।। न, श्रुतिसमवायित्वात् ।।१६।। व्यपदेशभेदाच्च ।।१७।। गुणश्चानर्थकः स्यात् ।।१८।। तथा याज्यापुरोरुचोः ।।१९।। वशायामर्थसमवायात् ।।२०।। यत्रेति वाऽर्थवत्वात् स्यात् ।।२१।। न त्वाम्नातेषु ।।२२।। दृश्यते ।।२३।। अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ।।२४।। शब्दपृथक्त्वाच्च ।।२५।। अनर्थकं च तद्वचनम् ।।२६।। अन्यश्चार्थः प्रतीयते ।।२७।। अभिधानं च कर्मवत् ।।२८।। फलनिर्वृत्तिश्च ।।२९।। विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ।।३०।। अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ।।३१।। तच्चोदकेषु मन्त्राख्या ।।३२।। शेषे ब्राह्मणशब्दः ।।३३।। अनाम्नातेष्वमन्त्रत्वामाम्नातेषु विभागः ।।३४।। तेषामृग्यत्रार्थवशेन पादव्यवस्था ।।३५।। गीतिषु सामाख्या ।।३६।। शेषे यजुःशब्दः ।।३७।। निगदो वा चतुर्थं स्याद्धर्मविशेषात् ।।३८।। व्यपदेशाच्च ।।३९।। यजूंषि

वा तद्रूपत्वात् ।।४०।। वचनाद्धर्मविशेषः ।।४१।। अर्थाच्च ।।४२।। गुणार्थो व्यपदेशः ।।४३।। सर्वेषामिति चेत् ।।४४।। न, ऋग्व्यपदेशात् ।।४५।। अर्थैकत्वादेकं वाक्यं, साकाङ्क्षंचेद् विभागे स्यात् ।।४६।। समेषु वाक्यभेदः स्यात् ।।४७।। अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ।।४८।। व्यवायान्नानुषज्येत ।।४९।।

।। इति पूर्वमीमांसादर्शने द्वितीयाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ।।१।। एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ।।२।। प्रकरणं तु पौर्णमास्यां रूपावचनात् ।।३।। विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ।।४।। गुणस्तु श्रुतिसंयोगात् ।।५।। चोदना वा गुणानां युगपच्छास्त्रात् चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्यते ।।६।। व्यपदेशश्च तद्वत् ।।७।। लिङ्गदर्शनाच्च ।।८।। पौर्णमासीवदुपांशुयाजः स्यात् ।।९।। चोदना वाऽप्रकृतत्वात् ।।१०।। गुणोपबन्धात् ।।११।। प्राये वचनाच्च ।।१२।। आधाराग्निहोत्रमरूपत्वात् ।।१३।। संज्ञोपबन्धात् ।।१४।। अप्रकृतत्वाच्च ।।१५।। चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ।।१६।। द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ।।१७।। अचोदकाश्च संस्काराः ।।१८।। तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ।।१९।। संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् ।।२०।। पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ।।२१।। संज्ञा चोत्पत्तिसंयोगात् ।।२२।। गुणश्चाऽपूर्वसंयोगे, वाक्ययोः समत्वात् ।।२३।। अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ।।२४।। फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् ।।२५।। अतुल्यत्वात्तु वाक्योर्गुणे तस्य प्रतीयेत ।।२६।। समेषु कर्मयुक्तं स्यात् ।।२७।। सौभरे, पुरुषश्रुतेर्निधनं, कामसंयोगः ।।२८।। सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यान्निधानार्था पुनः श्रुतिः ।।२९।।

।। इति पूर्वमीमांसादर्शने द्वितीयाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ।।१।। एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं सगुणवाक्यत्वात् ।।२।। अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ।।३।। आधाने सर्वशेषत्वात् ।।४।। अयनेषु चोदनान्तरं संज्ञोपबन्धात् ।।५।। अगुणाच्च कर्मचोदना ।।६।। समाप्तं च फले वाक्यम् ।।७।। विकारो वा प्रकरणात् ।।८।। लिङ्गदर्शनाच्च ।।९।। गुणात्संज्ञोपबन्धः ।।१०।। समाप्तिरविशिष्टा ।।११।। संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ।।१२।। यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ।।१३।। यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ।।१४।। लिङ्गदर्शनाच्च ।।१५।। विशये प्रायदर्शनात् ।।१६।। अर्थवादोपपत्तेश्च ।।१७।। संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ।।१८।। पार्त्नीवते तु पूर्वत्वादवच्छेदः

।।१६।। अद्रव्यत्वात्केवले कर्मशेषः स्यात् ।।२०।। अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ।।२१।। द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ।।२२।। तत्संयोगात् क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ।।२३।। प्रकरणान्तरे प्रयोजनान्यत्वम् ।।२४।। फलं चाकर्मसन्निधौ ।।२५।। सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ।।२६।। आग्नेयसूक्तहेतुत्वादभ्यासेन प्रतीयेत ।।२७।। अविभागात्तु कर्मणो द्विरुक्तेर्न विधीयते ।।२८।। अन्यार्था वा पुनः श्रुतिः ।।२६।।

।। इति पूर्वमीमांसादर्शने द्वितीयाध्यायस्य तृतीयः पादः ।।

## चतुर्थः पादः

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ।।१।। कर्तुर्वा श्रुतिसंयोगात् ।।२।। लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात् ।।३।। व्यपवर्गं च दर्शयति कालश्चेत् कर्मभेदः स्यात् ।।४।। अनित्यत्वात्तु नैवं स्यात् ।।५।। विरोधश्चापि पूर्ववत् ।।६।। कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्तं स्यात् ।।७।। नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्ताऽन्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ।।८।। एकं वा संयोगरूपचोदनाख्याविशेषात् ।।६।। न नाम्ना स्यादचोदनाभिधानत्वात् ।।१०।। सर्वेषां चैककर्म्यं स्यात् ।।११।। कृतकं चाभिधानम् ।।१२।। एकत्वेऽपि परम् ।।१३।। विद्यायां धर्मशास्त्रम् ।।१४।। आग्नेयवत्पुनर्वचनम् ।।१५।। अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ।।१६।। वाक्यासमवायात्, अर्थासन्निधेश्च ।।१७।। न चैकं प्रति शिष्यते ।।१८।। समाप्तिवच्च सम्प्रेक्षा ।।१६।। एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ।।२०।। प्रायश्चित्तं निमित्तेन ।।२१।। प्रक्रमाद्वा नियोगेन ।।२२।। समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ।।२३।। लिङ्गमवशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् ।।२४।। द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत, तस्मान्नित्यानुवादः स्यात् ।।२५।। विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात् ।।२६।। सारस्वते विप्रतिषेधाद्यदेति स्यात् ।।२७।। उपहव्येऽप्रतिप्रसवः ।।२८।। गुणार्था वा पुनः श्रुतिः ।।२६।। प्रत्ययञ्चापि दर्शयति ।।३०।। अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ।।३१।। विरोधिना त्वसंयोगादैककर्म्ये, तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ।।३२।।

।। इति पूर्वमीमांसादर्शने द्वितीयाध्यायस्य चतुर्थः पादः ।।

।। इति द्वितीयोऽध्यायः ।।

# तृतीयोऽध्यायः

## प्रथमः पादः

अथातः शेषलक्षणम् ।।१।। शेषः परार्थत्वात् ।।२।। द्रव्यगुणसंस्कारेषु बादरिः ।।३।। कर्माण्यपि

जैमिनिः, फलार्थत्वात् ।।४।। फलं च पुरुषार्थत्वात् ।।५।। पुरुषश्च कर्मार्थत्वात् ।।६।। तेषामर्थेन सम्बन्धः ।।७।। विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात्प्रकरणाविशेषाच्च ।।८।। अर्थलोपादकर्म स्यात् ।।६।। फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ।।१०।। द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ।।११।। अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ।।१२।। एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ।।१३।। सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ।।१४।। चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ।।१५।। संस्काराद्वा गुणानामव्यवस्था स्यात् ।।१६।। व्यवस्था वाऽर्थस्य श्रुतिसंयोगात् तस्य शब्दप्रमाणत्वात् ।।१७।। आनर्थक्यात्तदङ्गेषु ।।१८।। कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ।।१६।। साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ।।२०।। सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ।।२१।। गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात् ।।२२।। मिथश्चानर्थसम्बन्धात् ।।२३।। आनन्तर्यमचोदना ।।२४।। वाक्यानां च समाप्तत्वात् ।।२५।। शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत, मिथस्तेषामसम्बन्धात् ।।२६।। व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः ।।२७।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ।।१।। संस्कारकत्वादचोदितेन स्यात् ।।२।। वचनात्वयथार्थमैन्द्री स्यात् ।।३।। गुणाद्वाऽप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात् ।।४।। तथाह्वानमपीति चेत् ।।५।। न कालविधिश्चोदितत्वात् ।।६।। गुणाभावात् ।।७।। लिङ्गाच्च ।।८।। विधिकोपश्चोपदेशे स्यात् ।।६।। तथोत्थानविसर्जने ।।१०।। सूक्तवाके च कालविधिः परार्थत्वात् ।।११।। उपदेशो वा याज्याशब्दो हि नाकस्मात् ।।१२।। स देवतार्थस्तत्संयोगात् ।।१३।। प्रतिपत्तिरिति चेत्स्विष्टकृद्वदुभयसंस्कारः स्यात् ।।१४।। कृत्स्नोपदेशादुभयत्र सर्ववचनम् ।।१५।। यथार्थं वा शेषभूतसंस्कारात् ।।१६।। वचनादिति चेत् ।।१७।। प्रकरणविभागादुभे प्रति कृत्स्नशब्दः ।।१८।। लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ।।१६।। अधिकारे च मन्त्रविधिस्तदाख्येषु शिष्टत्वात् ।।२०।। तदाख्यो वा प्रकरणोपपत्तिभ्याम् ।।२१।। अनर्थकश्चोपदेशः स्यादसम्बन्धात्फलवताह्युपस्थानम् ।।२२।। सर्वेषां चोपदिष्टत्वात् ।।२३।। लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ।।२४।। तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य, चोदितत्वात् ।।२५।। गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ।।२६।। लिङ्गविशेष- निर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ।।२७।। यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ।।२८।। पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ।।२६।। अपनयाद्वा पूर्वस्याऽनुपलक्षणम् ।।३०।। ग्रहणाद्वाऽपनयः स्यात् ।।३१।। पात्नीवते तु पूर्ववत् ।।३२।। ग्रहणाद्वाऽपनीतं स्यात् ।।३३।। त्वष्टारं तूपलक्षयेत्पानात् ।।३४।। अतुल्यत्वात्तु नैवं स्यात् ।।३५।। त्रिंशच्च परार्थत्वात् ।।३६।। वषट्कारश्च कर्तृवत् ।।३७।। छन्दःप्रतिषेधस्तु सर्वगामित्वात् ।।३८।। ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ।।३६।। एकस्मिन् वा

देवतान्तराद्विभागवत् ।।४०।। छन्दश्च देवतावत् ।।४१।। सर्वेषु वाऽभावादेकछन्दसः ।।४२।। सर्वेषां त्वैकमन्त्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ।।४३।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

श्रुतेर्जाताधिकारः स्यात् ।।१।। वेदो वा प्रायदर्शनात् ।।२।। लिङ्गाच्च ।।३।। धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ।।४।। त्रयीविद्याख्या च तद्विदि ।।५।। व्यतिक्रमे यथाश्रुतीति चेत् ।।६।। न सर्वस्मिन्निवेशात् ।।७।। वेदसंयोगान्न प्रकरणेन बाध्येत ।।८।। गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ।।९।। भूयस्त्वेनोभयश्रुति ।।१०।। असंयुक्तं प्रकरणादितिकर्त्तव्यतार्थित्वात् ।।११।। क्रमश्च देशसामान्यात् ।।१२।। आख्या चैवं तदर्थत्वात् ।।१३।। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ।।१४।। अहीनो वा प्रकरणाद् गौणः ।।१५।। असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ।।१६।। द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य ।।१७।। पक्षेणार्थकृतस्येति चेत् ।।१८।। न, प्रकृतेरेकसंयोगात् ।।१९।। जाघनी चैकदेशत्वात् ।।२०।। चोदना वाऽपूर्वत्वादेकदेश इति चेत् ।।२१।। न प्रकृतेरशास्त्रनिष्पत्तेः ।।२२।। सन्तर्दनं प्रकृतौ, क्रयणवदनर्थलोपात् स्यात् ।।२३।। उत्कर्षो वा ग्रहणाद्विशेषस्य ।।२४।। कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ।।२५।। क्रतुतो वाऽर्थवादानुपपत्तेः स्यात् ।।२६।। संस्थाश्च कर्तृवद्धारणार्थाविशेषात् ।।२७।। उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात् ।।२८।। अविशेषात् स्तुतिर्व्यर्थेति चेत् ।।२९।। स्यादनित्यत्वात् ।।३०।। संख्यायुक्तं क्रतोः प्रकरणात् स्यात् ।।३१।। नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ।।३२।। पौष्णं पेषणं विकृतौ प्रतीयेताऽचोदनात्प्रकृतौ ।।३३।। तत्सर्वार्थमविशेषात् ।।३४।। चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ स्यात् ।।३५।। चरावर्पाति चेत् ।।३६।। न, पक्तिनामत्वात् ।।३७।। एकस्मिन्नेकसंयोगात् ।।३८।। धर्मविप्रतिषेधाच्च ।।३९।। अपि वा सद्वितीये स्यादेवतानिमित्तत्वात् ।।४०।। लिङ्गदर्शनाच्च ।।४१।। वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावात् द्विचरावपेषणं भवति ।।४२।। एकस्मिन्वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ।।४३।। हेतुमात्रमदन्तत्वम् ।।४४।। वचनं परम् ।।४५।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्य तृतीयः पादः ।।

## चतुर्थः पादः

निवीतमिति मनुष्यधर्मः, शब्दस्य तत्प्रधानत्वात् ।।१।। अपदेशो वाऽर्थस्य विद्यमानत्वात् ।।२।। विधिस्त्वपूर्वत्वत् स्यात् ।।३।। स प्रायात्कर्म धर्मः स्यात् ।।४।। वाक्यशेषत्वात् ।।५।। तत्प्रकरणे यत्संयुक्तमविप्रतिषेधात् ।।६।। तत्प्रधाने वा तुल्यवत्प्रसंख्यानादितरस्य तदर्थत्वात् ।।७।। अर्थवादो वा प्रकरणाात् ।।८।। विधिना चैकवाक्यत्वात् ।।९।। उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ।।१०।। परुषि

दितपूर्णघृतविदग्धं च तद्वत् ।।११।। अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ।।१२।। विधिर्वा संयोगान्तरात् ।।१३।। अहीनवत्पुरुषस्तदर्थत्वात् ।।१४।। प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ।।१५।। व्यपदेशादपकृष्येत ।।१६।। शंयौ च सर्वपरिदानात् ।।१७।। प्रागुपरोधान्मलवद्वाससः ।।१८।। अन्नप्रतिषेधाच्च ।।१६।। अप्रकरणे तु तद्धर्मस्ततो विशेषात् ।।२०।। अद्रव्यत्वात्तु शेषः स्यात् ।।२१।। वेदसंयोगात् ।।२२।। द्रव्यसंयोगाच्च ।।२३।। स्याद्वाऽस्य संयोगवत्फलेन सम्बन्धस्तस्मात्कर्मैतिशायनः ।।२४।। शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ।।२५।। होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ।।२६।। शेषश्च समाख्यानात् ।।२७।। दोषात्विष्टिलौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ।।२८।। अर्थवादो वाऽनुपपातात्तस्माद्यज्ञे प्रतीयेत ।।२६।। अचोदितं च कर्मभेदात् ।।३०।। सालिङ्गादार्त्विजे स्यात् ।।३१।। पानव्यापच्च तद्वत् ।।३२।। दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात् ।।३३।। तत्सर्वत्राविशेषात् ।।३४।। स्वामिनो वा तदर्थत्वात् ।।३५।। लिङ्गदर्शनाच्च ।।३६।। सर्वप्रदानं हविषस्तदर्थत्वात् ।।३७।। निरवदानात्तु शेषः स्यात् ।।३८।। उपायो वा तदर्थत्वात् ।।३६।। कृतत्वात्तु कर्मणः सकृत्स्याद् द्रव्यस्य गुणभूतत्वात् ।।४०।। शेषदर्शनाच्च ।।४१।। अप्रयोजकत्वादेकस्मात्क्रियेरञ्छेषस्य गुणभूतत्वात् ।।४२।। संस्कृतत्वाच्च ।।४३।। सर्वेभ्यो वा कारणाविशेषात् संस्कारस्य तदर्थत्वात् ।।४४।। लिङ्गदर्शनाच्च ।।४५।। एकस्माच्चेद्याथा-काम्यमविशेषात् ।।४६।। मुख्याद्वा पूर्वकालत्वात् ।।४७।। भक्षाश्रवणाद्दानशब्दः परिक्रये ।।४८।। तत्संस्तवाच्च ।।४६।। भक्षार्थो वा द्रव्ये समत्वात् ।।५०।। व्यादेशाद्दानसंस्तुतिः ।।५१।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्य चतुर्थः पादः ।।

## पञ्चमः पादः

आज्याच्च सर्वसंयोगात् ।।१।। कारणाच्च ।।२।। एकस्मिन्समवत्तशब्दात् ।।३।। आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य ।।४।। अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ।।५।। साधारण्यान्न ध्रुवायां स्यात् ।।६।। अक्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ।।७।। चमसवदिति चेत् ।।८।। चोदनाविरोधाद्धविः प्रकल्पनाच्च ।।६।। उत्पन्नाधिकारात्सति सर्ववचनम् ।।१०।। जातिविशेषात्परम् ।।११।। अन्त्यमरेकार्थे ।।१२।। साकम्प्रस्थाय्ये स्विष्टकृदिडञ्च तद्वत् ।।१३।। सौत्रामण्यां च ग्रहेषु ।।१४।। तद्वच्च शेषवचनम् ।।१५।। द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ।।१६।। अविभागाच्च शेषस्य सर्वान्प्रत्यविशिष्टत्वात् ।।१७।। ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः स्यात् ।।१८।। सोमेऽवचनाद् भक्षो न विद्यते ।।१६।। स्याद्वाऽन्यार्थदर्शनात् ।।२०।। वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ।।२१।। चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ।।२२।। उद्गातृचमसमेकः श्रुतिसंयोगात् ।।२३।। सर्वे वा सर्वसंयोगात् ।।२४।। स्तोत्रकारिणां वा तत्संयोगाद्बहुश्रुतेः ।।२५।। सर्वे तु वेदसंयोगात्कारणादेकदेशे स्यात् ।।२६।। ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् ।।२७।। हारियोजने वा सर्वसंयोगात् ।।२८।। चमसिनां वा सन्निधानात् ।।२६।। सर्वेषां तु विधित्वात्तदर्था चमसि श्रुतिः ।।३०।। वषट्काराच्च भक्षयेत् ।।३१।। होमाऽभिषवाभ्यां च ।।३२।। प्रत्यक्षोप- देशाच्चमसानामव्यक्तः शेषे ।।३३।। स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ।।३४।। चमसे चान्यदर्शनात् ।।३५।। एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ।।३६।। होता वा मन्त्रवर्णात् ।।३७।। वचनाच्च ।।३८।। कारणानुपूर्व्याच्च ।।३६।। वचनादनुज्ञातभक्षणम् ।।४०।। तदुपहूत उपहूयस्वेत्यनेनानुज्ञा- पयेल्लिङ्गात् ।।४१।।

तत्रार्थात्प्रतिवचनम् ।।४२।। तदेकपात्राणां समवायात् ।।४३।। याज्यापनयेनापनीतो भक्षः प्रवरवत् ।।४४।। यष्टुर्वा कारणागमात् ।।४५।। प्रवृत्तत्वात्प्रवरस्यानपायः ।।४६।। फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ।।४७।। इज्याविकारो वा संस्कारस्य तदर्थत्वात् ।।४८।। होमात् ।।४६।। चमसैश्च तुल्यकालत्वात् ।।५०।! लिङ्गदर्शनाच्च ।।५१।। अनुप्रसर्पिषु सामान्यात् ।।५२।। ब्राह्मणा वा तुल्यशब्दत्वात् ।।५३।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्य पञ्चमः पादः ।।

## षष्ठः पादः

सर्वार्थमप्रकरणात् ।।१।। प्रकृतौ वाऽद्विरुक्तत्वात् ।।२।। तद्वर्जं तु वचनप्राप्ते ।।३।। दर्शनादिति चेत् ।।४।। चोदनैकार्थ्यात् ।।५।। उत्पत्तिरिति चेत् ।।६।। न तुल्यत्वात् ।।७।। चोदनार्थकात्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ।।८।। प्रकरणविशेषात्तु विकृतौ विराधि स्यात् ।।६।। नैमित्तकं तु, प्रकृतौ तद्विकारः, संयोगविशेषात् ।।१०।। इष्ट्यर्थमग्न्याधेयं प्रकरणात् ।।११।। न वा तासां तदर्थत्वात् ।।१२।। लिङ्गदर्शनाच्च ।।१३।। तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ।।१४।। सर्वार्थं वाऽऽधानस्य स्वकालत्वात् ।।१५।। तासामग्निः प्रकृतितः प्रयाजवत् स्यात् ।।१६।। न वा तासां तदर्थत्वात् ।।१७।। तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ।।१८।। स्थानाच्च पूर्वस्य ।।१६।। श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ।।२०।। तेनोत्कृष्टस्य कालविधिरिति चेत् ।।२१।। नैकदेशत्वात् ।।२२।। अर्थेनेति चेत् ।।२३।। न, श्रुतिविप्रतिषेधात् ।।२४।। स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ।।२५।। लिङ्गदर्शनाच्च ।।२६।। अचोदना गुणार्थेन ।।२७।। दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ।।२८।। प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ।।२६।। तद्वत्सवनान्तरे ग्रहाम्नानम् ।।३०।। रशना च लिङ्गदर्शनात् ।।३१।। आराच्छिष्टमसंयुक्तमितरैः सन्निधानात् ।।३२।। संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ।।३३।। निर्देशाद् व्यवतिष्ठेत ।।३४।। अग्न्यङ्गमप्रकरणे तद्वत् ।।३५।। नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ।।३६।। प्रतिनिधिश्च तद्वत् ।।३७।। तद्वत् प्रयोजनैकत्वात् ।।३८।। अशास्त्रलक्षणत्वाच्च ।।३६।। नियमार्था गुणश्रुतिः ।।४०।। संस्थास्तु समानविधानाः प्रकरणाविशेषात् ।।४१।। व्यपदेशश्च तुल्यवत् ।।४२।। विकारास्तु कामसंयोगे नित्यस्य समत्वात् ।।४३।। अपि वा द्विरुक्तत्वात्प्रकृतेर्भविष्यन्तीति ।।४४।। वचनात्तु समुच्चयः ।।४५।। प्रतिषेधाच्च पूर्वलिङ्गानाम् ।।४६।। गुणविशेषादेकस्य व्यपदेशः ।।४७।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्य षष्ठः पादः ।।

## सप्तमः पादः

प्रकरणविशेषादसंयुक्तं प्रधानस्य ।।१।। सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ।।२।। आरादपीति चेत् ।।३।। न, तद्वाक्यं हि तदर्थत्वात् ।।४।। लिङ्गदर्शनाच्च ।।५।। फलसंयोगात्तु स्वामियुक्तं प्रधानस्य

।।६।। चिकीर्षया च संयोगात् ।।७।। तथाऽभिधानेन ।।८।। तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ।।६।। गुणाऽभिधानात्सर्वार्थमभिधानम् ।।१०।। दीक्षादक्षिणं तु वचनात्प्रधानस्य ।।११।। निवृत्तिदर्शनाच्च ।।१२।। तथा यूपस्य वेदिः ।।१३।। देशमात्रं वा शिष्येणैकवाक्यत्वात् ।।१४।। सामिधेनीस्तदन्वाहुरिति हविर्द्धानयोर्वचनात्सामिधेनीनाम् ।।१५।। देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ।।१६।। समाख्यानं च तद्वत् ।।१७।। शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात् स्वयं प्रयोगे स्यात् ।।१८।। उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात् ।।१६।। अन्यो वा स्यात् परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ।।२०।। तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ।।२१।। अपि वा श्रुतिभेदात् प्रतिनामधेयं स्युः ।।२२।। एकस्य कर्मभेदादिति चेत् ।।२३।। नोत्पत्तौ हि ।।२४।। चमसाध्वर्यवश्च तैर्व्यपदेशात् ।।२५।। उत्पत्तौ तु बहुश्रुतेः ।।२६।। दशत्वं लिङ्गदर्शनात् ।।२७।। शमिता च शब्दभेदात् ।।२८।। प्रकरणाद्वोत्पत्त्यसंयोगात् ।।२६।। उपगाश्च लिङ्गदर्शनात् ।।३०।। विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ।।३१।। कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ।।३२।। न वा परिसंख्यानात् ।।३३।। पक्षेणेति चेत् ।।३४।। न सर्वेषामधिकारः ।।३५।। नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ।।३६।। उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ।।३७।। स्वामिसप्तदशाः कर्मसामान्यात् ।।३८।। ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ।।३६।। तत्संयोगात् कर्मणो व्यवस्था स्यात्, संयोगस्यार्थवत्त्वात् ।।४०।। तस्योपदेशसमाख्यानेन निर्देशः ।।४१।। तद्वच्च लिङ्गदर्शनम् ।।४२।। प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ।।४३।। पुरोऽनुवाक्याधिकारो वा प्रैषसन्निधानात् ।।४४।। प्रातरनुवाके च होतृदर्शनात् ।।४५।। चमसांश्चमसाध्वर्यवः समाख्यानात् ।।४६।। अध्वर्युर्वा तन्न्यायत्वात् ।।४७।। चमसे चान्यदर्शनात् ।।४८।। अशक्तौ ते प्रतीयेरन् ।।४६।। वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ।।५०।। तद्गुणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात्सहाङ्गैरव्यक्तः शेषे ।।५१।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्य सप्तमः पादः ।।

## अष्टमः पादः

स्वामिकर्मपरिक्रयः कर्मणस्तदर्थत्वात् ।।१।। वचनादितरेषां स्यात् ।।२।। संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यतिष्ठेरन् ।।३।। याजमानास्तु तत्प्रधानत्वात्कर्मवत् ।।४।। व्यपदेशाच्च ।।५।। गुणत्वेन तस्य निर्देशः ।।६।। चोदनां प्रति भावाच्च ।।७।। अतुल्यत्वादसमानविधानाः स्युः ।।८।। तपश्च फलसिद्धित्वाल्लोकवत् ।।६।। वाक्यशेषश्च तद्वत् ।।१०।। वचनादितरेषां स्यात् ।।११।। गुणत्वाच्च वेदेन न व्यवस्था स्यात् ।।१२।। तथा कामोऽर्थसंयोगात् ।।१३।। व्यपदेशादितरेषां स्यात् ।।१४।। मन्त्राश्चाऽकर्मकारणास्तद्वत् ।।१५।। विप्रयोगे च दर्शनात् ।।१६।। द्व्याम्नातेषूभौ द्व्याम्नानस्याऽर्थवत्त्वात् ।।१७।। ज्ञाते च वाचनं न ह्यविद्वान् विहितोऽस्ति ।।१८।। याजमाने समाख्यानात्कर्माणि याजमानं स्युः ।।१६।। अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ।।२०।। विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ।।२१।। प्रैषेषु च पराधिकारात् ।।२२।। अध्वर्युस्तु दर्शनात् ।।२३।। गौणो वा कर्मसामान्यात् ।।२४।। ऋत्विक्फलं करणेष्वर्थवत्त्वात् ।।२५।। स्वामिनो वा तदर्थत्वात् ।।२६।। लिङ्गदर्शनाच्च ।।२७।। कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् ।।२८।। व्यपदेशाच्च ।।२६।। द्रव्यसंस्कारः प्रकरणाऽविशेषात् सर्वकर्मणाम् ।।३०।। निर्देशात्तु विकृतावपूर्वस्याऽनधिकारः ।।३१।। विरोधे च

श्रुतिविशेषाद्व्यक्तः शेषे ।।३२।। अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ।।३३।। विकृतौ सर्वार्थः शेषः प्रकृतिवत् ।।३४।। मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ।।३५।। सन्निधानविशेषादसम्भवे तदङ्गानाम् ।।३६।। आधानेऽपि तथेति चेत् ।।३७।। नाऽप्रकरणत्वादङ्गस्य तन्निमित्तत्वात् ।।३८।। तत्काले वा लिङ्गदर्शनात् ।।३९।। सर्वेषां वाऽविशेषात् ।।४०।। न्यायोक्ते लिङ्गदर्शनम् ।।४१।। मांसं तु सवनीयानां चोदनाविशेषात् ।।४२।। भक्तिरसन्निधावन्याय्येति चेत् ।।४३।। स्यात् प्रकृतिलिङ्गाद्वैराजवत् ।।४४।।

।। इति पूर्वमीमांसादर्शने तृतीयाध्यायस्याष्टमः पादः ।।

।। इति तृतीयोऽध्यायः ।।

# चतुर्थोऽध्यायः

## प्रथमः पादः

अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ।।१।। यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् ।।२।। तदुत्सर्गे कर्माणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते, तेनार्थेनाभिसम्बन्धात् क्रियायां पुरुषश्रुतिः ।।३।। अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ।।४।। अपि वा कारणाऽग्रहणे तदर्थमर्थस्याऽनभिसम्बन्धात् ।।५।। तथा च लोकभूतेषु ।।६।। द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात् प्रदीयेरन् ।।७।। स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्तस्माद्यथाश्रुति स्युः ।।८।। चोद्यन्ते चार्थकर्मसु ।।९।। लिङ्गदर्शनाच्च ।।१०।। तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ।।११।। एकश्रुतित्वाच्च ।।१२।। प्रतीयत इति चेत् ।।१३।। नाऽशब्दं तत्प्रमाणत्वात्पूर्ववत् ।।१४।। शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं हि यथाऽन्येषाम् ।।१५।। तद्वच्च लिङ्गदर्शनम् ।।१६।। तथा च लिङ्गम् ।।१७।। आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ।।१८।। चोदनायां त्वनारम्भो विभक्तत्वान्न ह्यन्येन विधीयते ।।१९।। स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतत्वाऽऽश्रयाद्धिगुणीभावः ।।२०।। अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ।।२१।। एकनिष्पत्तेः सर्वं समं स्यात् ।।२२।। संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ।।२३।। मुख्यशब्दाभिसंस्तवाच्च ।।२४।। पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ।।२५।। अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ।।२६।। पशावना- लम्भाल्लोहितशकृतोरकर्मत्वम् ।।२७।। एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ।।२८।। निर्देशात्तस्यान्यदर्थादिति चेत् ।।२९।। न शेषसन्निधानात् ।।३०।। कर्म कार्यात् ।।३१।। लिङ्गदर्शनाच्च ।।३२।। अभिधारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात् ।।३३।। न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात् ।।३४।। हेतुत्वाच्च सहप्रयोगस्य ।।३५।। अभावदर्शनाच्च ।।३६।। सति सव्यवचनम् ।।३७।। न तस्येति चेत् ।।३८।। स्यात्तस्य मुख्यत्वात् ।।३९।। समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ।।४०।। वचने हि हेत्वसामर्थ्यम् ।।४१।। तत्रोत्पत्तिरविभक्ता स्यात् ।।४२।। तत्र जौहवमनुयाजप्रतिषेधार्थम् ।।४३।। औपभृतं तथेति चेत् ।।४४।। स्याज्जुहूप्रतिषेधान्नित्यानुवादः ।।४५।। तदष्टसंख्यं श्रवणात् ।।४६।। अनुग्राहाच्च जौहवस्य ।।४७।। द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ।।४८।।

।। इति पूर्वमीमांसादर्शने चतुर्थाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ।।१।। जात्यन्तराच्च शङ्कते ।।२।। तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ।।३।। शकलश्रुतेश्च ।।४।। प्रतियूपं च दर्शनात् ।।५।। आदाने करोतिशब्दः ।।६।। शाखायां तत्प्रधानत्वात् ।।७।। शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यात् ।।८।। श्रुत्यपायाच्च ।।९।। हरणे तु जुहोतिर्योगसामान्याद् द्रव्याणां चार्थशेषत्वात् ।।१०।। प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ।।११।। अर्थेऽपीति चेत् ।।१२।। न तस्यानधिकारादर्थस्य च कृतत्वात् ।।१३।। उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात् ।।१४।। संयवनार्थानां या प्रतिपत्तिरितरासां तत्प्रधानत्वात् ।।१५।। प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ।।१६।। अर्थकर्म वा कर्तृसंयोगात्स्रग्वत् ।।१७।। कर्मयुक्ते च दर्शनात् ।।१८।। उत्पत्तौ येन संयुक्तं तदर्थं तत्, श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् ।।१९।। सौमिके च कृतार्थत्वात् ।।२०।। अर्थकर्म वाऽभिधानसंयोगात् ।।२१।। प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थाऽवभृथश्रुतिः ।।२२।। कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ।।२३।। नियमार्था वाः श्रुतिः ।।२४।। तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ।।२५।। संस्कारे च तत्प्रधानत्वात् ।।२६।। यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ।।२७।। तदुक्तेः श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ।।२८।। विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ।।२९।। अपि वोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् ।।३०।।

।। इति पूर्वमीमांसादर्शने चतुर्थाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ।।१।। उत्पत्तेश्चातत्प्रधानत्वात् ।।२।। फलं तु तत्प्रधानायाम् ।।३।। नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात् ।।४।। एकस्य तूभयत्वे संयोगपृथक्त्वम् ।।५।। शेष इति चेत् ।।६।। नार्थपृथक्त्वात् ।।७।। द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ।।८।। पृथक्त्वाद्व्यवतिष्ठेत ।।९।। चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते ।।१०।। अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानामर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतोऽप्यसमर्थानामानन्तर्य्येऽप्य-सम्बन्धस्तस्माच्छ्रुत्येकदेशः सः ।।११।। वाक्यार्थश्च गुणार्थवत् ।।१२।। तत्सर्वार्थमनादेशात् ।।१३।। एकं वा चौदनैकत्वात् ।।१४।। स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ।।१५।। प्रत्ययाच्च ।।१६।। क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ।।१७।। फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ।।१८।। अङ्गेषु स्तुतिः परार्थत्वात् ।।१९।। काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ।।२०।। वीते च कारणे नियमात् ।।२१।। कामो वा तत्संयोगेन चोद्यते ।।२२।। अङ्गे गुणत्वात् ।।२३।। वीते च नियमस्तदर्थम् ।।२४।। सार्वकाम्यमङ्गकामैः प्रकरणात् ।।२५।। फलोपदेशो वा प्रधानशब्दसंयोगात् ।।२६।। तत्र सर्वेऽविशेषात् ।।२७।। योगसिद्धि-र्वाऽर्थस्योत्पत्त्यसंयोगात् ।।२८।। समवाये चोदनासंयोगस्यार्थवत्त्वात् ।।२९।। कालश्रुतौ काल इति चेत् ।।३०।। नासमवायात्प्रयोजनेन स्यात् ।।३१।। उभयार्थमिति चेत् ।।३२।। न शब्दैकत्वात् ।।३३।। प्रकरणादिति चेत् ।।३४।। नोत्पत्तिसंयोगात् ।।३५।। अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन सम्बन्धात् ।।३६।। उत्पत्तिकालविषये

कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ।।३७।। फलसंयोगस्त्वचोदिते, न स्यादशेषभूतत्वात् ।।३८।। अङ्गानां तूपघातसंयोगे निमित्तार्थः ।।३६।। प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ।।४०।। अप्रवृत्ते तु चोदना तत्सामान्यत्स्वकाले स्यात् ।।४१।।

।। इति पूर्वमीमांसादर्शने चतुर्थाध्यायस्य तृतीयः पादः ।।

## चतुर्थः पादः

प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ।।१।। अपि वाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ।।२।। मध्यस्थं यस्य तन्मध्ये ।।३।। सर्वासां वा समत्वाच्चोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ।।४।। प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ।।५।। अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ।।६।। फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ।।७।। दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ।।८।। नित्यश्च ज्येष्ठशब्दत्वात् ।।६।। सार्वरूप्याच्च ।।१०।। नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसम्बन्धाद्भङ्गित्वाच्चान्तरायस्य ।।११।। वैश्वानरश्च नित्यः स्यान्नित्यः समानसंख्यत्वात् ।।१२।। पक्षे वोत्पन्नसंयोगात् ।।१३।। षट्चितिः पूर्ववत्त्वात् ।।१४।। ताभिश्च तुल्यसंख्यानात् ।।१५।। अर्थवादोपपत्तेश्च ।।१६।। एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ।।१७।। विप्रतिषेधात्ताभिः समानसंख्यत्वम् ।।१८।। पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ।।१६।। तुल्यवच्चाप्रसंख्यानात् ।।२०।। विप्रतिषिद्धे च दर्शनात् ।।२१।। पश्वङ्गं रशना स्यात्तदागमे विधानात् ।।२२।। यूपाङ्गं वा तत्संस्कारात् ।।२३।। अर्थवादश्च तदर्थवत् ।।२४।। स्वरुश्चाप्येकदेशत्वात् ।।२५।। निष्क्रयश्च तदङ्गवत् ।।२६।। पश्वङ्गं वार्थकर्मत्वात् ।।२७।। भक्त्या निष्क्रियवादः स्यात् ।।२८।। दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ।।२६।। अपि वाङ्गानि कानिचिद्येष्वङ्गत्वेन संस्तुतिः सामान्यादभिसंस्तवः ।।३०।। तथा चान्यार्थदर्शनम् ।।३१।। अवशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ।।३२।। नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ।।३३।। पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च, तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वं तत्सन्निधावसंयुक्तं तदङ्गं स्याद् भागित्वात् कारणस्याश्रुतेश्चान्यसम्बन्धः ।।३४।। गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ।।३५।। तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसम्बन्धः ।।३६।। उत्पत्तावभिसम्बन्धस्तस्मादङ्गोपदेशः स्यात् ।।३७।। तथा चान्यार्थदर्शनम् ।।३८।। ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ।।३६।। गुणानां तूत्पत्तिवाक्येन सम्बन्धात् कारणश्रुतिस्तस्मात् सोमः प्रधानं स्यात् ।।४०।। तथा चान्यार्थदर्शनम् ।।४१।।

।। इति पूर्वमीमांसादर्शने चतुर्थाध्यायस्य चतुर्थः पादः ।।

।। इति चतुर्थोऽध्यायः ।।

# पञ्चमोऽध्यायः

## प्रथमः पादः

श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् ।।१।। अर्थाच्च ।।२।। अनियमोऽन्यत्र ।।३।। क्रमेण वा नियम्येत, क्रत्वेकत्वे तद्गुणत्वात् ।।४।। अशाब्द इति चेत् स्याद्वाक्यशब्दत्वात् ।।५।। अर्थकृते वानुमानं

## चतुर्थः पादः

प्रकृतिलिङ्गसंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ।।१।। चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ।।२।। सर्वत्र तु ग्रहाम्नातमधिकं स्यात्प्रकृतिवत् ।।३।। अधिकश्चैकवाक्यत्वात् ।।४।। लिङ्गदर्शनाच्च ।।५।। प्राजापत्येषु चाम्नानात् ।।६।। आमने लिङ्गदर्शनाच्च ।।७।। उपगेषु शरवत्स्यात्प्रकृति-लिङ्गसंयोगात् ।।८।। आनर्थक्यात्त्वधिकं स्यात् ।।६।। संस्कारे चान्यसंयोगात् ।।१०।। प्रयाजवदिति चेन्नार्थान्यत्वात् ।।११।। आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ।।१२।। अधिकं वाऽन्यार्थत्वात् ।।१३।। सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ।।१४।। अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ।।१५।। सर्वेषामविशेषात् ।।१६।। एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ।।१७।। स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ।।१८।। पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ।।१६।। वचनानि त्वपूर्वत्वात् ।।२०।। विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ।।२१।। शेषाणां वा चोदनैकत्वात्तस्मात् सर्वत्र श्रूयते ।।२२।। तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ।।२३।। प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ।।२४।। अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत् ।।२५।। आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् ।।२६।। द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ।।२७।। बुधन्वान्पवमानवद्विशेषनिर्देशात् ।।२८।। मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ।।२६।। विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ।।३०।। यथोक्तं वा विप्रतिपत्तेर्न चोदना ।।३१।। स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्त्तेत ।।३२।। संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ।।३३।। सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ।।३४।। सर्वस्य वैककर्म्यात् ।।३५।। स्विष्टकृदावापिकोऽनुयाजे स्यात् प्रयोजनवदङ्गा-नामर्थसंयोगात् ।।३६।। अन्वाहेति च शस्त्रवत् कर्म स्याच्चोदनान्तरात् ।।३७।। संस्कारो वा चोदितस्य शब्दस्य वचनार्थत्वात् ।।३८।। अवाच्यत्वान्नेति चेत् ।।३६।। स्याद् गुणार्थत्वात् ।।४०।। मनोतायां तु वचनादविकारः स्यात् ।।४१।। पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वात् स्यादृचां प्रविभक्तत्वात् ।।४२।। स्वयोनौ वा सर्वाख्यत्वात् ।।४३।। यूपवदिति चेत् ।।४४।। न कर्मसंयोगात् ।।४५।। कार्यत्वादुत्तरयोर्यथाप्रकृति ।।४६।। समानदेवते वा तृचस्याविभागात् ।।४७।। ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ।।४८।। उभयपानात्पृषदाज्ये दध्नोऽप्युपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात् ।।४६।। न वा परार्थत्वाद्यज्ञपतिवत् ।।५०।। स्याद्वा आवाहनस्य तादर्थ्यात् ।।५१।। न वा संस्कारशब्दत्वात् ।।५२।। स्याद्वा द्रव्याभिधानात् ।।५३।। दध्नस्तु गुणभूतत्वादाज्यपानिगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ।।५४।। दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ।।५५।। अपि वाऽऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ।।५६।। अपि वाऽख्याविकारत्वात्तेन स्यादुपलक्षणम् ।।५७।। न वा स्याद् गुणशास्त्रत्वात् ।।५८।।

।। इति पूर्वमीमांसादर्शने दशमाध्यायस्य चतुर्थः पादः ।।

## पञ्चमः पादः

आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ।।१।। लिङ्गदर्शनाच्च ।।२।। विकल्पो वा समत्वात् ।।३।। क्रमादुपसर्जनोऽन्ते स्यात् ।।४।। लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ।।५।। आदितो

वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ।।६।। एकत्रिके तृचादिषु माध्यन्दिनछन्दसां श्रुतिभूतत्वात् ।।७।। आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ।।८।। यथानिवेशञ्च प्रकृतिवत्संख्यामात्रविकारत्वात् ।।६।। त्रिकस्तृचेषु धुर्ये स्यात् ।।१०।। एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ।।११।। चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ।।१२।। प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ।।१३।। अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वासामर्थवत्वात् ।।१४।। स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ।।१५।। आगमेन वाऽभ्यासस्याश्रुतित्वात् ।।१६।। संख्यायाश्च पृथक्त्वनिवेशात् ।।१७।। पराक्छब्दत्वात् ।।१८।। उक्ताविकाराच्च ।।१६।। अश्रुतित्वादिति चेत् ।।२०।। स्यादर्थचोदितानां परिमाणशास्त्रम् ।।२१।। आवापवचनं वाऽभ्यासे नोपपद्यते ।।२२।। साम्नां चोत्पत्तिसामर्थ्यात् ।।२३।। धुर्येष्वपीति चेत् ।।२४।। नावृत्तिधर्मत्वात् ।।२५।। बहिष्पवमाने तु ऋगागमः सामैकत्वात् ।।२६।। अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ।।२७।। अविशेषान्नेति चेत् ।।२८।। स्याद्धर्मत्वात् प्रकृतिवदभ्यस्येताऽसंख्यापूरणात् ।।२६।। यावदुक्तं वा कृतपरिमाणत्वात् ।।३०।। अधिकानाञ्च दर्शनात् ।।३१।। न कर्मस्वपीति चेत् ।।३२।। न चोदितत्वात् ।।३३।। षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ।।३४।। प्रकृतौ चाऽभावदर्शनात् ।।३५।। अयज्ञवचनाच्च ।।३६।। प्रकृतौ वा शिष्टत्वात् ।।३७।। प्रकृतिदर्शनाच्च ।।३८।। आम्नातं परिसंख्यार्थम् ।।३६।। उक्तमभावदर्शनम् ।।४०।। गुणादयज्ञत्वम् ।।४१।। तस्याग्रयणाद्ग्रहणम् ।।४२।। उक्थ्याच्च वचनात् ।।४३।। स तृतीयसवने वचनात्स्यात् ।।४४।। अनभ्यासे पराक्छब्दस्य तादर्थ्यात् ।।४५।। उक्थ्याविच्छेदवचनाच्च ।।४६।। आग्रयणाद्वा पराक्छब्दस्य देशवाचित्वात्पुनराधेयवत् ।।४७।। विच्छेदः स्तोमसामान्यात् ।।४८।। उक्थ्याऽग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् ।।४६।। सस्तुतशस्त्रो वा तदङ्गत्वात् ।।५०।। लिङ्गदर्शनाच्च ।।५१।। वचनात्संस्थान्यत्वम् ।।५२।। अभावादतिरात्रेषु गृह्यते ।।५३।। अन्वयो वाऽनारभ्य विधानात् ।।५४।। चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ।।५५।। अपि वा संख्यावत्त्वान्नाहीनेषु गृह्यते पक्षवदेकस्मिन्संख्यार्थभावात् ।।५६।। भोजने च तत्संख्यं स्यात् ।।५७।। जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् ।।५८।। उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ।।५६।। मुख्येन वा नियम्येत ।।६०।। निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ।।६१।। ऐन्द्रावायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ।।६२।। अपि वा धर्माविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ।।६३।। धारासंयोगाच्च ।।६४।। कामसंयोगे तु वचनानादादितः प्रतिकर्षः स्यात् ।।६५।। तद्देशानां वाऽग्रसंयोगात्तद्युक्ते कामशास्त्रं स्यान्नित्यसंयोगात् ।।६६।। परेषु चाग्रशब्दः पूर्ववत् स्यात्तदादिषु ।।६७।। प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ।।६८।। प्रतिकर्षञ्च दर्शयति ।।६६।। पुरस्तादैन्द्रवायवादग्रस्य कृतदेशत्वात् ।।७०।। तुल्यधर्मत्वाच्च ।।७१।। तथा च लिङ्गदर्शनम् ।।७२।। सादनं चापि शेषत्वात् ।।७३।। लिङ्गदर्शनाच्च ।।७४।। प्रदानं चापि सादनवत् ।।७५।। न वा प्रधानत्वाच्छेषत्वात्सादनं तथा ।।७६।। त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ।।७७।। अपि वाऽहर्गणेष्वग्निवत्समानविधानं स्यात् ।।७८।। द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ।।७६।। व्यूढो वा लिङ्गदर्शनात्समूढविकारः स्यात् ।।८०।। कामसंयोगात् ।।८१।। तस्योभयथा प्रवृत्तिरैककर्म्यात् ।।८२।। एकादशिनवत् त्र्यनीका प्रवृत्तिः स्यात् ।।८३।। स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसंख्यत्वात् ।।८४।। पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ।।८५।। वचनात्परिवृत्तिरैकादशिनेषु ।।८६।। लिङ्गदर्शनाच्च ।।८७।। छन्दोव्यतिक्रमाद् व्यूढे भक्षपवमानपरिधिकपालमन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ।।८८।।

।। इति पूर्वमीमांसादर्शने दशमाध्यायस्य पञ्चमः पादः ।।

## षष्ठः पादः

एकर्च्चस्थानानि यज्ञे स्युः स्वाध्यायवत् ।।१।। तृचे वा लिङ्गदर्शनात् ।।२।। स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ।।३।। पृष्ठ्यस्य युगपद्विधेरेकाहवद्द्विसामत्वम् ।।४।। विभक्ते वाऽसमस्त-विधानात्तद्विभागेऽप्रतिषिद्धम् ।।५।। समासस्त्वेकादशिनेषु तत्प्रकृतित्वात् ।।६।। विहारप्रतिषेधाच्च ।।७।। श्रुतितो वा लोकवद्विभागः स्यात् ।।८।। विहारप्रकृतित्वाच्च ।।९।। यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यं विशये च तदासत्तेः ।।१०।। त्रयस्तथेति चेत् ।।११।। न समत्वात्प्रयाजवत् ।।१२।। सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ।।१३।। विधेस्तु विप्रकर्षः स्यात् ।।१४।। वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ।।१५।। पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ।।१६।। त्रिवृद्वदिति चेत् ।।१७।। न प्रकृतावकृत्स्नसंयोगात् ।।१८।। विधित्वान्नेति चेत् ।।१९।। न स्याद्विशये तन्न्ययत्वात्कर्माविभागात् ।।२०।। प्रकृतेश्चाविकारात् ।।२१।। त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात् ।।२२।। स्तोमस्य वा तल्लिङ्गत्वात् ।।२३।। उभयसाम्नि विश्वजिद्विभागः स्यात् ।।२४।। पृष्ठार्थे वाऽतदर्थत्वात् ।।२५।। लिङ्गदर्शनाच्च ।।२६।। पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात् प्रकृतिवत् ।।२७।। अन्ते वा कृतकालत्वात् ।।२८।। अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ।।२९।। अन्ते वा कृतकालत्वात् ।।३०।। आवृत्तिस्तु व्यवाये कालभेदात् ।।३१।। मधु न दीक्षिता ब्रह्मचारित्वात् ।।३२।। प्राश्येते वा यज्ञार्थत्वात् ।।३३।। मानसमहरन्तरं स्याद् द्वादशाहे व्यपदेशात् ।।३४।। तेन च संस्तवात् ।।३५।। अहरन्ताच्च परेण चोदना ।।३६।। पक्षे संख्या सहस्रवत् ।।३७।। अहरङ्गं वांशुवच्चोदनाभावात् ।।३८।। दशमविसर्गवचनाच्च ।।३९।। दशमेऽहन्नीति च तद्गुणशास्त्रात् ।।४०।। संख्यासामञ्जस्यात् ।।४१।। पश्वतिरेके चैकस्य भावात् ।।४२।। स्तुतिव्यपदेशमङ्गेनविप्रतिषिद्धं व्रतवत् ।।४३।। वचनादतदन्तत्वम् ।।४४।। सत्रमेकः प्रकृतिवत् ।।४५।। बहुवचनात्तु बहूनां स्यात् ।।४६।। अपदेशः स्यादिति चेत् ।।४७।। नैकव्यपदेशात् ।।४८।। सन्निवापं च दर्शयति ।।४९।। बहूनामिति चैकस्मिन्विशेषवचनं व्यर्थम् ।।५०।। अन्ये स्युर्ऋत्विजः प्रकृतिवत् ।।५१।। अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ।।५२।। कर्तृसंस्कारो वचनादाधातृवदिति चेत् ।।५३।। स्याद्विशये तन्न्यायत्वात्प्रकृतिवत् ।।५४।। स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ।।५५।। न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ।।५६।। बहूनामिति तुल्येषु विशेषवचनं नोपपद्यते ।।५७।। दीक्षिताऽदीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ।।५८।। अदक्षिणत्वाच्च ।।५९।। द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ।।६०।। यजतिचोदनादहीनत्वं स्वामिनां चाऽस्थितपरिमाणत्वात् ।।६१।। अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदः स्यात् ।।६२।। सर्वस्य वैककर्म्यात् ।।६३।। पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ।।६४।। ज्योतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिवत् तस्मात्तासां विकारः स्यात् ।।६५।। द्वादशाहे तु वचनात्प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्परेषु तासां संख्याविकारः स्यात् ।।६६।। परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ।।६७।। भेदस्तु गुणसंयोगात् ।।६८।। प्रत्यहं सर्वसंस्कारः प्रकृतिवत् सर्वासां सर्वविशेषत्वात् ।।६९।। एकार्थत्वान्नेति चेत् ।।७०।। उत्पत्तौ कालभेदात् ।।७१।। विभज्य तु संस्कारवचनाद्द्वादशाहवत् ।।७२।। लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वात् ।।७३।। यावदर्थं वाऽर्थशेषत्वादतोऽर्थेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ।।७४।। आग्नेये कृत्स्नविधिः ।।७५।। ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ।।७६।। वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ।।७७।। तत्राहर्गणेऽर्थाद्वासः सः प्रकृतिः स्यात् ।।७८।। मानं पत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ।।७९।। हरणे वा

श्रुत्यसंयोगादर्थाद्विकृतौ तेन ।।८०।।

।। इति पूर्वमीमांसादर्शने दशमाध्यायस्य षष्ठः पादः ।।

## सप्तमः पादः

पशारेकहविष्ट्वं समस्तचोदितत्वात् ।।१।। प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्कल्पनत्वात् ।।२।। हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ।।३।। आज्यभागाद्वा निर्देशात्परिसंख्या स्यात् ।।४।। तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ।।५।। अंससिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात् प्रदानत्वात्तेषां निरवदानप्रतिषेधः स्यात् ।।६।। अपि वा परिसंख्या स्यादनवदानीयशब्दत्वात् ।।७।। अब्राह्मणे च दर्शनात् ।।८।। शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वं सर्वेषां न श्रपणं स्यात् ।।६।। इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ।।१०।। त्र्यङ्गैर्वा शरवद्विकारः स्यात् ।।११।। अध्यूध्नी होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् ।।१२।। शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ।।१३।। अशास्त्रत्वात्तु नैवं स्यात् ।।१४।। अपि वा दानमात्रं स्याद्भक्षशब्दानभिसम्बन्धात् ।।१५।। दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् ।।१६।। आग्नीध्रश्च वनिष्ठुरध्यूध्नीवत् ।।१७।। अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ।।१८।। स्याद्वा होत्रध्वर्य्युविकारत्वात्तयोः कर्माभिसम्बन्धात् ।।१६।। द्विभागः स्याद्द्विकर्मत्वात् ।।२०।। एकत्वाद्वैकभागः स्याद् भागस्याश्रुतिभूतत्वात् ।।२१।। प्रतिप्रस्थातुश्च वपाश्रपणात् ।।२२।। अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ।।२३।। विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थिका स्यात् ।।२४।। अपि वाऽऽग्नेयवद्द्विशब्दत्वं स्यात् ।।२५।। न वा शब्दपृथक्त्वात् ।।२६।। अधिकं वाऽर्थवत्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ।।२७।। प्रतिषेधः स्यादिति चेत् ।।२८।। नाश्रुतत्वात् ।।२६।। अग्रहणादिति चेत् ।।३०।। न तुल्यत्वात् ।।३१।। तथा तद्ग्रहणे स्यात् ।।३२।। अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वात् ।।३३।। ततोऽपि यावदुक्तं स्यात् ।।३४।। स्विष्टकृद् भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ।।३५।। अप्रतिषेधो वा दर्शनादिडायां स्यात् ।।३६।। प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ।।३७।। शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ।।३८।। नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ।।३६।। प्रतिषेधार्थवच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ।।४०।। प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ।।४१।। प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ।।४२।। उपसत्सु यावदुक्तकर्म स्यात् ।।४३।। स्रौवेण वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् ।।४४।। अप्रतिषेधो वा प्रतिषिध्य प्रतिप्रसवात् ।।४५।। अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ।।४६।। अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात् ।।४७।। आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात् ।।४८।। प्रयाजानां त्वेकदेशप्रतिषेधाद्वाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ।।४६।। आज्यभागयोर्ग्रहणं नित्यानुवादो वा गृहमेधीयवत्स्यात् ।।५०।। विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् ।।५१।। उभयप्रदेशान्नेति चेत् ।।५२।। शरेष्वपीति चेत् ।।५३।। विरोध्यग्रहणात्तथा शरेष्विति चेत् ।।५४।। तथेतरस्मिन् ।।५५।। श्रुत्यानर्थक्यमिति चेत् ।।५६।। ग्रहणस्यार्थवत्वादुभयोरप्रतिपत्तिः स्यात् ।।५७।। सर्वासाञ्च गुणानामर्थवत्त्वाद् ग्रहणमप्रवृत्ते स्यात् ।।५८।। अधिकं स्यादिति चेत् ।।५६।। नार्थाभावात् ।।६०।। तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृतौ हि विकल्पः स्यात् ।।६१।। यावच्छ्रुतीति चेत् ।।६२।। न प्रकृतावशब्दत्वात् ।।६३।। विकृतौ त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं

यदेति स्यात् ।।६४।। ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ।।६५।। विरोधित्वाच्च लोकवत् ।।६६।। क्रतोश्च तद्गुणत्वात् ।।६७।। विरोधिनाञ्च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात् ।।६८।। पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ।।६९।। क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ।।७०।। यथाश्रुतीति चेत् ।।७१।। न चोदनैकत्वात् ।।७२।।

।। इति पूर्वमीमांसादर्शने दशमाध्यायस्य सप्तमः पादः ।।

## अष्टमः पादः

प्रतिषेधः प्रदेशेऽनारभ्यविधाने प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ।।१।। अर्थप्राप्तवदिति चेत् ।।२।। न, तुल्यहेतुत्वादुभयं शब्दलक्षणम् ।।३।। अपि तु वाक्यशेषः स्यादन्यायत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ।।४।। अपूर्वे चार्थवादः स्यात् ।।५।। शिष्ट्वा तु प्रतिषेधः स्यात् ।।६।। न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्यात् ।।७।। पूर्वैश्च तुल्यकालत्वात् ।।८।। उपवादश्च तद्वत् ।।९।। प्रतिषेधादकर्मेति चेत् ।।१०।। न शब्दपूर्वत्वात् ।।११।। दीक्षितस्य दान-होम-पाक-प्रतिषेधोऽविशेषात्सर्व-दान-होम-पाक-प्रतिषेधः स्यात् ।।१२।। अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ।।१३।। तस्य वाऽप्यानुमानिकमविशेषात् ।।१४।। अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात् ।।१५।। अविशेषेण यच्छास्त्रमन्यायत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषाशिष्टं स्यात् ।।१६।। अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम् ।।१७।। विकारे तु तदर्थं स्यात् ।।१८।। वाक्यशेषो वा क्रतुनाऽग्रहणात् स्यादनारभ्यविधानस्य ।।१९।। मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ।।२०।। अनाम्नाते दर्शनात् ।।२१।। प्रतिषेधाच्च ।।२२।। अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ।।२३।। मासि ग्रहणं च तद्वत् ।।२४।। ग्रहणं वा तुल्यत्वात् ।।२५।। लिङ्गदर्शनाच्च ।।२६।। ग्रहणं समानविधानं स्यात् ।।२७।। मासि ग्रहणमभ्यासप्रतिषेधार्थम् ।।२८।। उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ।।२९।। तत्संस्कारश्रुतेश्च ।।३०।। ताभ्यां वा सह स्विष्टकृतः सहत्वे द्विरभिधारणेन तदाप्तिवचनात् ।।३१।। तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ।।३२।। साप्तदश्यवन्नियम्येत ।।३३।। हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ।।३४।। पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ।।३५।। न त्वनित्याधिकारोऽस्ति विधेर्नित्येन सम्बन्धस्तस्मादवाक्यशेषत्वम् ।।३६।। सति च नैकदेशेन कर्त्तुः प्रधानभूतत्वात् ।।३७।। कृत्स्नत्वात्तु तथा स्तोमे ।।३८।। कर्त्तुः स्यादिति चेत् ।।३९।। न गुणार्थत्वात्प्राप्ते न चोपदेशार्थः ।।४०।। कर्मणोस्तु प्रकरणे तन्न्यायत्वाद् गुणानां लिङ्गेन न कालशास्त्रं स्यात् ।।४१।। यदि तु सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ।।४२।। अपि वा विहितत्वाद्गुणार्थायां पुनः श्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्याद्यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ।।४३।। विधिं तु बादरायणः ।।४४।। प्रतिषिद्धविज्ञानाद्वा ।।४५।। तथा चान्यार्थदर्शनम् ।।४६।। उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ।।४७।। ध्रौवाद्वा सर्वसंयोगात् ।।४८।। तद्वच्च देवतायां स्यात् ।।४९।। तन्त्रीणां प्रकरणात् ।।५०।। धर्माद्वा स्यात्प्रजापतिः ।।५१।। देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ।।५२।। विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ।।५३।। अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद् गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ।।५४।। आनन्तर्यं च सान्नाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे ।।५५।। अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र

विधीयते ।।५६।। प्रतिषिद्ध्य विधानाद्वा विष्णुः समानदेशः स्यात् ।।५७।। तथा चान्यार्थदर्शनम् ।।५८।। न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात् ।।५६।। विकारे चाश्रुतित्वात् ।।६०।। द्विपुरोडाशायां स्यादन्तरालगुणार्थत्वात् ।।६१।। अजामिकरणार्थत्वाच्च ।।६२।। तदर्थमिति चेन्न, तत्प्रधानत्वात् ।।६३।। अशिष्टेन च सम्बन्धात् ।।६४।। उत्पत्तेस्तु निवेशः स्याद् गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ।।६५।। उभयोस्तु विधानात् ।।६६।। गुणानाञ्च परार्थत्वादुपवेषवद् यदेति स्यात् ।।६७।। अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ।।६८।। प्रशंसार्थमजामित्वम् ।।६६।।

।। इति पूर्वमीमांसादर्शने दशमाध्यायस्य अष्टमः पादः ।।

।। इति दशमोऽध्यायः ।।

## एकादशोऽध्यायः

### प्रथमः पादः

प्रयोजनाभिसम्बन्धात्पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ।।१।। शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ।।२।। अविधानात्तु नैवं स्यात् ।।३।। शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ।।४।। अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात् फलान्यत्वम् ।।५।। अर्थभेदस्तु तत्रार्थे हैकार्थ्यादैककर्म्यम् ।।६।। शब्दभेदान्नेति चेत् ।।७।। कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ।।८।। कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ।।६।। आरम्भस्य शब्दपूर्वत्वात् ।।१०।। एकेनापि समाप्येत कृतार्थत्वाद् यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ।।११।। फलाभावादिति चेत् ।।१२।। न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ।।१३।। ऐकशब्द्यादिति चेत् ।।१४।। नार्थपृथक्त्वात्समत्वादगुणत्वम् ।।१५।। विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतिभूताभिसंयोगार्थेन युगपत्प्राप्तेर्यथा क्रमं स्वशब्दो निवीतवत्तस्मात्सर्वप्रयोगे प्रवृत्तिः स्यात् ।।१६।। तथा कर्मोपदेशः स्यात् ।।१७।। क्रत्वन्तरेषु पुनर्वचनम् ।।१८।। उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे यथाकामी प्रतीयेत ।।१६।। कर्मण्यारम्भभाव्यत्वात्कृषिवत् प्रत्यारम्भं फलानि स्युः ।।२०।। अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ।।२१।। सकृत्तु स्यात्कृतार्थत्वादङ्गवत् ।।२२।। शब्दार्थश्च तथा लोके ।।२३।। अपि वा सम्प्रयोगे यथाकामीप्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ।।२४।। ऐकशब्द्यात्तथाङ्गेषु ।।२५।। लोके कर्माऽर्थलक्षणम् ।।२६।। क्रियाणामर्थशेषत्वात्प्रत्यक्षमतस्तन्निर्वृत्याऽपवर्गः स्यात् ।।२७।। धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ।।२८।। क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात् ।।२६।। सकृद्वा कारणैकत्वात् ।।३०।। परिमाणे चानियमे न स्यात् ।।३१।। फलारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् ।।३२।। अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ।।३३।। पृथक्त्वाद्विधितः परिमाणं स्यात् ।।३४।। अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ।।३५।। अभ्यासो वा छेदनसम्मार्गाऽवदानेषु वचनात्सकृत्त्वस्य ।।३६।। अनभ्यासस्तु वाच्यत्वात् ।।३७।। बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ।।३८।। दृष्टः प्रयोग इति

चेत् ।।३६।। तथेह ।।४०।। भक्त्येति चेत् ।।४१।। तथेतरस्मिन् ।।४२।। प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ।।४३।। तथा चान्यार्थदर्शनम् ।।४४।। प्रकृत्या च पूर्ववत्तदासत्तेः ।।४५।। उत्तरासु न यावत्स्वमपूर्वत्वात् ।।४६।। यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ।।४७।। साकल्यविधानात् ।।४८।। बह्वर्थत्वाच्च ।।४६।। अग्निहोत्रे चाशेषवद्यवागूनियमः ।।५०।। तथा पयः प्रतिषेधः कुमाराणाम् ।।५१।। सर्वप्रापिणापि लिङ्गेन संयुज्य देवताभिसंयोगात् ।।५२।। प्रधानकर्मार्थत्वादङ्गानां तद् भेदात् कर्मभेदः प्रयोगे स्यात् ।।५३।। क्रमकोपश्च यौगपद्ये स्यात् ।।५४।। तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात् ।।५५।। एकार्थ्यादव्यवायः स्यात् ।।५६।। तथा चान्यार्थदर्शनं कामुकायनः ।।५७।। तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ।।५८।। असंस्पृष्टोऽपि तादर्थ्यात् ।।५६।। विभवाद्वा प्रदीपवत् ।।६०।। अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ।।६१।। सकृदिज्यां कामुकायनः परिमाणविरोधात् ।।६२।। विधेस्त्वितरार्थत्वात् सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ।।६३।। विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ।।६४।। क्वचिद्विधानान्नेति चेत् ।।६५।। न विधेश्चोदितत्वात् ।।६६।। व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ।।६७।। भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधिः प्रधानकालत्वात् ।।६८।। तथा चान्यार्थदर्शनम् ।।६६।। विधिरिति चेन्न वर्तमानापदेशात् ।।७०।।

।। इति पूर्वमीमांसादर्शने एकादशाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ।।१।। अविधिश्चेत्कर्मणामभिसम्बन्धः प्रतीयेत तल्लक्षणार्थाभिसंयोगाद् विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ।।२।। अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ।।३।। यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात्प्रधानार्थाभिसंयोगात् ।।४।। तथा चान्यार्थदर्शनम् ।।५।। श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात्कर्मणोऽश्रुतित्वाच्च ।।६।। अङ्गानि तु विधानत्वात्प्रधानोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम् ।।७।। द्रव्यदेवतं तथेति चेत् ।।८।। न चोदना विधिशेषत्वान्नियमार्थो विशेषः ।।६।। तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ।।१०।। इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ।।११।। कालभेदान्नेति चेत् ।।१२।। नैकदेशत्वात्पशुवत् ।।१३।। अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ।।१४।। तथा चान्यार्थदर्शनम् ।।१५।। तदऽवयवेषु स्यात् ।।१६।। पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ।।१७।। तथा स्यादध्वरकल्पेष्टौ विशेषैककालत्वात् ।।१८।। इष्टिरिति चैकवच्छ्रुतिः ।।१६।। न वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ।।२०।। प्रथमस्य वा कालवचनम् ।।२१।। फलैकत्वादिष्टिशब्दो यथान्यत्र ।।२२।। वसाहोमस्तन्त्रमेकदेवत्येषु स्यात् प्रदानस्यैककालत्वात् ।।२३।। कालभेदात्त्वावृत्तिर्देवताभेदे ।।२४।। अन्ते यूपाहुतिस्तद्वत् ।।२५।। इतरप्रतिषेधो वा अनुवादमात्रमन्तिकस्य ।।२६।। अशास्त्रत्वाच्च देशानाम् ।।२७।। अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ।।२८।। द्रव्यदेवतावत् ।।२६।। साङ्गो वा प्रयोगवचनैकत्वात् ।।३०।।

लिङ्गदर्शनाच्च ।।३१।। शब्दविभागाच्च देवतानपनयः ।।३२।। दक्षिणेऽग्नौ वरुणप्रधासेषु देशभेदात्सर्वं विक्रियते ।।३३।। अचोदनेति चेत् ।।३४।। स्यात्पौर्णमासीवत् ।।३५।। प्रयोगचोदनेति चेत् ।।३६।। तथेह ।।३७।। आसादनमिति चेत् ।।३८।। नोत्तरेणैकवाक्यत्वात् ।।३९।। अवाच्यत्वात् ।।४०।। आम्नायवचनं तद्वत् ।।४१।। कर्तृभेदस्तथेति चेत् ।।४२।। न समवायात् ।।४३।। लिङ्गदर्शनाच्च ।।४४।। वेदिसंयोगादिति चेत् ।।४५।। न देशमात्रत्वात् ।।४६।। एकाग्नित्वादपरेषु तन्त्रैः स्यात् ।।४७।। नाना वा कर्तृभेदात् ।।४८।। पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ।।४९।। संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ।।५०।। वपानां चानभिधारणस्य दर्शनात् ।।५१।। पञ्चशारदीयास्तथेति चेत् ।।५२।। न चोदनैकवाक्यत्वात् ।।५३।। संस्कारणां च दर्शनात् ।।५४।। दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तत्समानं तन्त्रं स्यात् ।।५५।। समानवचनं तद्वत् ।।५६।। अप्रतिकर्षो वाऽर्थहेतुत्वात्सहत्वं विधीयते ।।५७।। पूर्वस्मिश्चावभृथस्य दर्शनात् ।।५८।। दीक्षाणां चोत्तरस्य ।।५९।। समानः कालसामान्यात् ।।६०।। निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षः स्यात् ।।६१।। अपनयो वा प्रसिद्धेनाभिसंयोगात् ।।६२।। प्रतिपत्तिरिति चेन्न; कर्मसंयोगात् ।।६३।। उदयनीये च तद्वत् ।।६४।। प्रतिपत्तिर्वाऽकर्मसंयोगात् ।।६५।। अर्थकर्म वा शेषत्वाच्छ्यणवत्तदर्थेन विधानात् ।।६६।।

।। इति पूर्वमीमांसादर्शने एकादशाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ।।१।। द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ।।२।। यूपश्चाकर्मकालत्वात् ।।३।। संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ।।४।। तत्कालस्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां च वचनादन्यकालत्वम् ।।५।। सकृन्मानं च दर्शयति ।।६।। स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ।।७।। साधारणे वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ।।८।। सोमान्ते च प्रतिपत्तिदर्शनात् ।।९।। तत्कालो वा प्रस्तरवत् ।।१०।। न चोत्पत्तिवाक्यत्वात्प्रदेशात्प्रस्तरे तथा ।।११।। अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाहनि विकल्पः स्यात् ।।१२।। पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातःसवन-मध्यात्वाच्छिष्टे चाभिप्रवृत्तत्वात् ।।१३।। वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ।।१४।। पशौ च पुरोडाशे समानतन्त्रं भवेत् ।।१५।। अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ।।१६।। प्रधानापवर्गे वा तदर्थत्वात् ।।१७।। अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ।।१८।। अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ।।१९।। सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ।।२०।। तत्कालत्वादावर्तेत प्रयोगवती विशेषसम्बन्धात् ।।२१।। अप्रयोगाङ्गमिति चेत् ।।२२।। स्यात्प्रयोगनिर्देशात्कर्तृ-भेदवत् ।।२३।। तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ।।२४।। अग्निवदिति चेत् ।।२५।। न प्रयोगसाधारण्यात् ।।२६।। लिङ्गदर्शनाच्च ।।२७।। तद्धि तथेति चेत् ।।२८।। नाशिष्टत्वादितरन्यायत्वाच्च ।।२९।। विध्येकत्वादिति चेत् ।।३०।। न कृत्स्नस्य पुनः प्रयोगात् प्रधानवत् ।।३१।। लौकिकेषु यथाकामी संस्कारानर्थलोपात् ।।३२।। यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् ।।३३।। यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ।।३४।। मुख्यसाधारणं वा मरणस्यानियतत्वात् ।।३५।। यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ।।३६।। न शास्त्रलक्षणत्वात् ।।३७।। उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ।।३८।।

शब्दसामञ्जस्यमिति चेत् ।।३६।। तथाऽऽशिरे ।।४०।। शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद् भूतोपदेशः ।।४१।। प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ।।४२।। अग्न्याधेये वा विप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ।।४३।। प्रतिपत्तिर्वा यथान्येषाम् ।।४४।। उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ।।४५।। अङ्गविपर्यासो विना वचनादिति चेत् ।।४६।। उत्कर्षः संयोगात्कालमात्रमितरत्र ।।४७।। प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ।।४८।। न श्रुतिप्रतिषेधात् ।।४६।। विकारस्थान इति चेत् ।।५०।। न चोदना- पृथक्त्वात् ।।५१।। उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ।।५२।। वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ।।५३।।

।। इति पूर्वमीमांसादर्शने एकादशाध्यायस्य तृतीयः पादः ।।

## चतुर्थः पादः

चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ।।१।। प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टि-वदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्या तदेकत्वादेकशब्दोपदेशः स्यात् ।।२।। तथा चान्यार्थदर्शनम् ।।३।। अनियमः स्यादिति चेत् ।।४।। नोपदिष्टत्वात् ।।५।। लाघवातिपत्तिश्च ।।६।। प्रयोजनैकत्वात् ।।७।। विशेषार्था पुनः श्रुतिः ।।८।। अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ।।६।। वचनात्कामसंयोगेन ।।१०।। क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ।।११।। पवमानहविष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ।।१२।। लिङ्गदर्शनाच्च ।।१३।। वचनात्तु तन्त्रभेदः स्यात् ।।१४।। सहत्वे नित्यानुवादः स्यात् ।।१५।। द्वादशाहे तत्प्रकृतित्वा-देकैकमहरपवृज्येत कर्मपृथक्त्वात् ।।१६।। अह्नं वा श्रुतिभूतत्वात्तत्र साङ्गं क्रियेत तथा माध्यन्दिने ।।१७।। अपि वा फलकर्तृसम्बन्धात् सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ।।१८।। साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ।।१६।। तदपेक्षं च द्वादशत्वम् ।।२०।। दीक्षोपसदां च संख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ।।२१।। वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् ।।२२।। तथा चान्यार्थदर्शनम् ।।२३।। चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ।।२४।। भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् ।।२५।। तथा चान्यार्थदर्शनम् ।।२६।। श्वःसुत्यावचनं च तद्वत् ।।२७।। पश्वतिरेकश्च ।।२८।। सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ।।२६।। अपि वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वादविभागाच्च ।।३०।। पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ।।३१।। भेदस्तु सन्देहाद्देवतान्तरे स्यात् ।।३२।। अर्थाद्वा लिङ्गकर्म स्यात् ।।३३।। अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानत्वात् ।।३४।। अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात् ।।३५।। सकृदिति चेत् ।।३६।। न कालभेदात् ।।३७।। जात्यन्तरेषु भेदः पंक्तिवैषम्यात् ।।३८।। वृद्धिदर्शनाच्च ।।३६।। कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ।।४०।। प्रतिप्रधानं वा प्रकृतिवत् ।।४१।। सर्वेषां चाभिप्रथमं स्यात् ।।४२।। एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ।।४३।। द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात् ।।४४।। निर्वपणलवनस्तरणाज्यग्रहणेषु च एकद्रव्य- वत्प्रयोजनैकत्वात् ।।४५।। द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ।।४६।। वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ।।४७।। एकस्य वा

गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ।।४८।। कण्डूयने प्रत्यङ्गं कर्मभेदात् स्यात् ।।४९।। अपि वा चोदनैककालमेककर्म्यं स्यात् ।।५०।। स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ।।५१।। प्रयाणे त्वार्थनिर्वृत्तेः ।।५२।। उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ।।५३।। न सन्निपातित्वादसन्निपातिकर्मणां विशेषग्रहणे कालैकत्वात्सकृद् वचनम् ।।५४।। हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात्स्यात् ।।५५।। अध्रिगोश्च विपर्यासात् ।।५६।। करिष्यद्वचनात् ।।५७।।

।। इति पूर्वमीमांसादर्शने एकादशाध्यायस्य चतुर्थः पादः ।।

।। इति एकादशोऽध्यायः ।।

# द्वादशोऽध्यायः

## प्रथमः पादः

तन्त्रिसमवाये चोदनातः समानामेकतन्त्रत्वमतुल्येषुतु भेदः स्यात्, विधिप्रक्रमतादर्थ्यात्तादर्थ्ये श्रुतिकालनिर्देशात् ।।१।। गुणकालविकाराच्च तन्त्रभेदः स्यात् ।।२।। तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ।।३।। विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ।।४।। एकेषां चाशक्यत्वात् ।।५।। एकाग्निवच्च दर्शनम् ।।६।। जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ।।७।। नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ।।८।। अकर्म वा कृतदूषा स्यात् ।।९।। पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ।।१०।। न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ।।११।। शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ।।१२।। श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् ।।१३।। हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् ।।१४।। अप्रसिद्धिर्वाऽन्य देशत्वात्प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ।।१५।। अनसां च दर्शनात् ।।१६।। तद्युक्तं च कालभेदात् ।।१७।। मन्त्राश्च सन्निपातित्वात् ।।१८।। धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ।।१९।। तथा व्रतमुपेतत्वात् ।।२०।। विप्रतिषेधाच्च ।।२१।। सत्यवदिति चेत् ।।२२।। न संयोगपृथक्त्वात् ।।२३।। ग्रहार्थं च पूर्वमिष्टेस्त-दर्थत्वात् ।।२४।। शेषवदिति चेत् ।।२५।। न वैश्वदेवो हि ।।२६।। स्याद्व्यपदेशात् ।।२७।। न; गुणार्थत्वात् ।।२८।। सन्नहनञ्च वृत्तत्वात् ।।२९।। अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्यर्थम् ।।३०।। शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ।।३१।। भृतत्वाच्च परिक्रयः ।।३२।। शेषभक्षास्तथेति चेत् ।।३३।। न कर्मसंयोगात् ।।३४।। प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियेत ।।३५।। ब्रह्मापीति चेत् ।।३६।। न प्राङ् नियमात्तदर्थं हि ।।३७।। निर्दिष्टस्येति चेत् ।।३८।। नाश्रुतत्वात् ।।३९।। होतुस्तथेति चेत् ।।४०।। न कर्मसंयोगात् ।।४१।। यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेत ।।४२।। न वा कृतत्वात्तदुपदेशो हि ।।४३।। देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते ।।४४।। सन्नहनहरणे तथेति चेत् ।।४५।। नान्यार्थत्वात् ।।४६।।

।। इति पूर्वमीमांसादर्शने द्वादशाध्याय प्रथमः पादः ।।

## द्वितीयः पादः

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ।।१।। मांसपाकप्रतिषेधश्च तद्वत् ।।२।। निर्देशाद्वा वैदिकानां स्यात् ।।३।। सति चोपासनस्य दर्शनात् ।।४।। अभावदर्शनाच्च ।।५।। मांसपाको विहितप्रतिषेधः स्याद् वाऽऽहुतिसंयोगात् ।।६।। वाक्यशेषो वा दक्षिणास्मिन्नानारभ्यविधानस्य ।।७।। सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ।।८।। क्रिया वा देवतार्थत्वात् ।।६।। लिङ्गदर्शनाच्च ।।१०।। हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ।।११।। पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्विनयोश्चापवृक्तार्थत्वात् ।।१२।। योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ।।१३।। निशि यज्ञे प्राकृतस्याप्रवृत्तिः स्यात्प्रत्यक्षशिष्टत्वात् ।।१४।। कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ।।१५।। वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ।।१६।। तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ।।१७।। वैगुण्यादिध्माबर्हिर्न साधयेदग्न्याधानं च यदि देवतार्थम् ।।१८।। आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ।।१६।। स्याद्वा कालस्याशेषभूतत्वात् ।।२०।। प्रारम्भविभागाच्च ।।२१।। विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ।।२२।। मुख्यं वा पूर्वचोदनाल्लोकवत् ।।२३।। तथा चान्यार्थदर्शनम् ।।२४।। अङ्गगुणविरोधे च तादर्थ्यात् ।।२५।। परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ।।२६।। यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ।।२७।। इतरो वा तस्य तत्र विधानात् ।।२८।। उभयोश्चाङ्गसंयोगः ।।२६।। पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ।।३०।। पाशुकं वा तस्य वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ।।३१।। पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ।।३२।। अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ।।३३।। अधिकश्च गुणः साधारणेऽविरोधात्कांस्य- भोजिवदमुख्येऽपि ।।३४।। तत्प्रवृत्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ।।३५।। न वाऽविरोधात् ।।३६।। शास्त्रलक्षणाच्च ।।३७।।

।। इति पूर्वमीमांसादर्शने द्वादशाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ।।१।। अविरोधो वा उपरिवासो हि वत्सत्वक् ।।२।। अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ।।३।। आगन्तुकाद्वा स्वधर्मा स्यात् श्रुतिविशेषादितरस्य च मुख्यत्वात् ।।४।। स्वस्थानत्वाच्च ।।५।। स्विष्टकृच्छ्रवणान्नेति चेत् ।।६।। विकारः पवमानवत् ।।७।। अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ।।८।। एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ।।६।। एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ।।१०।। अभ्यस्येतार्थवत्त्वादिति चेत् ।।११।। नाश्रुतित्वात् ।।१२।। सति चाभ्यासशास्त्रत्वात् ।।१३।। विकल्पवच्च दर्शयति ।।१४।। कालान्तरेऽर्थवत्त्वं स्यात् ।।१५।। प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः ।।१६।। समुच्चयस्त्वदोषो निर्घातार्थेषु ।।१७।। मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ।।१८।। विद्यां प्रतिविधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात् प्रयोगस्य ।।१६।। भाषास्वरोपदेशेषु ऐरवत्प्रवचनप्रतिषेधः स्यात् ।।२०।। मन्त्रोपदेशो वा न भाषिकस्य प्रायोपपत्तेर्भाषिकश्रुतिः ।।२१।। विकारः कारणाग्रहणे ।।२२।। तन्न्यायत्वाददृष्टोऽप्येवम् ।।२३।। तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ।।२४।। मन्त्राणां करणार्थत्वान्मन्त्रान्तेन

कर्मादिसन्निपातः स्यात्सर्वस्य वचनार्थत्वात् ।।२५।। सन्ततवचनाद्धारायामादिसंयोगः ।।२६।। कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ।।२७।। आधारे च दीर्घधारत्वात् ।।२८।। मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात् ।।२९।। संख्याविहितेषु समुच्चयोऽसन्निपातित्वात् ।।३०।। ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् ।।३१।। याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ।।३२।। विकल्पो वा समुच्चयस्याश्रुतित्वात् ।।३३।। गुणार्थत्वादुपदेशस्य ।।३४।। वषट्कारे नानार्थत्वात्समुच्चयः ।।३५।। हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ।।३६।। समुच्चयो वा क्रियमाणानुवादित्वात् ।।३७।। समुच्चयं च दर्शयति ।।३८।।

।। इति पूर्वमीमांसादर्शने द्वादशाध्यायस्य तृतीयः पादः ।।

## चतुर्थः पादः

जपाश्चाकर्मसंयुक्ता स्तुत्याशीरभिधानाच्च याजमानेषु समुच्चयः स्यादाशीः पृथक्त्वात् ।।१।। समुच्चयं च दर्शयति ।।२।। याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ।।३।। लिङ्गदर्शनाच्च ।।४।। क्रयणेषु त्वविकल्पः स्यादेकार्थत्वात् ।।५।। समुच्चयो वा प्रयोगे द्रव्यसमवायात् ।।६।। समुच्चयं च दर्शयति ।।७।। संस्कारे च तत्प्रधानत्वात् ।।८।। संख्यासु तु विकल्पः स्यात् श्रुतिविप्रतिषेधात् ।।९।। द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे न नियमः प्रधानत्वात् ।।१०।। द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ।।११।। कपालेऽपि तथेति चेत् ।।१२।। न कर्मणः परार्थत्वात् ।।१३।। प्रतिपत्तिस्तु शेषत्वात् ।।१४।। शृतेऽपि पूर्ववत्त्वात् स्यात् ।।१५।। विकल्पे त्वर्थकर्म नियमप्रधानत्वात् शेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ।।१६।। उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ।।१७।। असति चासंस्कृतेषु कर्म स्यात् ।।१८।। तस्य च देवतार्थत्वात् ।।१९।। विकारो वा तदुक्तहेतुः ।।२०।। वचनादसंस्कृतेषु कर्म स्यात् ।।२१।। संसर्गे चापि दोषः स्यात् ।।२२।। वचनादिति चेत् ।।२३।। तथेतरस्मिन् ।।२४।। उत्सर्गेऽपि परिग्रहः कर्मणः कृतत्वात् ।।२५।। स आहवनीयः स्यादाहुतिसंयोगात् ।।२६।। अन्यो वोद्धृत्याऽऽहरणात् ।।२७।। तस्मिन् संस्कारकर्म शिष्टत्वात् ।।२८।। स्थानाद्वा परिलुप्येरन् ।।२९।। नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ।।३०।। नित्यधारणाद्वा प्रतिषेधो गतश्रियः ।।३१।। परार्थान्येको यजमानगणे ।।३२।। अनियमोऽविशेषात् ।।३३।। मुख्यो वाविप्रतिषेधात् ।।३४।। सत्रे गृहपतिरसंयोगाद्धौत्रवत् ।।३५।। आम्नायवचनाच्च ।।३६।। सर्वैर्वा तदर्थत्वात् ।।३७।। गृहपतिरिति च समाख्यासामान्यात् ।।३८।। विप्रतिषेधे परम् ।।३९।। हौत्रे परार्थत्वात् ।।४०।। वचनं परम् ।।४१।। प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ।।४२।। स्मृतेर्वा स्याद् ब्राह्मणानाम् ।।४३।। फलचमसविधानाच्चेतरेषाम् ।।४४।। सान्नाय्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ।।४५।। चतुर्धाकरणे च निर्देशात् ।।४६।। अन्वाहार्येच दर्शनात् ।।४७।।

।। इति पूर्वमीमांसादर्शने द्वादशाध्यायस्य चतुर्थः पादः ।।

।। इति द्वादशोऽध्यायः ।।

।। समाप्तं चेदं मीमांसादर्शनम् ।।

# वेदान्तदर्शनम्

## अथ प्रथमाध्याये प्रथमः पादः

अथातो ब्रह्मजिज्ञासा ।।१।। जन्माद्यस्य यतः ।।२।। शास्त्रयोनित्वात् ।।३।। तत्तु समन्वयात् ।।४।। ईक्षतेर्नाशब्दम् ।।५।। गौणश्चेन्नात्मशब्दात् ।।६।। तन्निष्ठस्य मोक्षोपदेशात् ।।७।। हेयत्वावचनाच्च ।।८।। स्वाप्यात् ।।६।। गतिसामान्यात् ।।१०।। श्रुतत्वाच्च ।।११।। आनन्दमयोऽभ्यासात् ।।१२।। विकारशब्दान्नेति चेन्न प्राचुर्यात् ।।१३।। तद्धेतुव्यपदेशाच्च ।।१४।। मान्त्रवर्णिकमेव च गीयते ।।१५।। नेतरोऽनुपपत्तेः ।।१६।। भेदव्यपदेशाच्च ।।१७।। कामाच्च नानुमानापेक्षा ।।१८।। अस्मिन्नस्य च तद्योगं शास्ति ।।१६।। अन्तस्तद्धर्मोपदेशात् ।।२०।। भेदव्यपदेशाच्चान्यः ।।२१।। आकाशस्तल्लिङ्गात् ।।२२।। अत एव प्राणः ।।२३।। ज्योतिश्चरणाभिधानात् ।।२४।। छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम् ।।२५।। भूतादिपादव्यपदेशोपपत्तेश्चैवम् ।।२६।। उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्य-विरोधात् ।।२७।। प्राणस्तथाऽनुगमात् ।।२८।। न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ।।२६।। शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।।३०।। जीवमुख्यप्राणिलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।।३१।।

।। इति प्रथमाध्यायस्य प्रथमः पादः ।।

## अथ प्रथमाध्याये द्वितीयः पादः

सर्वत्र प्रसिद्धोपदेशात् ।।१।। विवक्षितगुणोपपत्तेश्च ।।२।। अनुपपत्तेस्तु न शारीरः ।।३।। कर्मकर्तृव्यपदेशाच्च ।।४।। शब्दविशेषात् ।।५।। स्मृतेश्च ।।६।। अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।।७।। सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ।।८।। अत्ता चराचरग्रहणात् ।।६।। प्रकरणाच्च ।।१०।। गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।।११।। विशेषणाच्च ।।१२।। अन्तर उपपत्तेः ।।१३।। स्थानादिव्यपदेशाच्च ।।१४।। सुखविशिष्टाभिधानादेव च ।।१५।। श्रुतोपनिषत्कगत्यभिधानाच्च ।।१६।। अनवस्थितेरसम्भवाच्च नेतरः ।।१७।। अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ।।१८।। न च स्मार्तमतद्धर्माभिलापात् ।।१६।। शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ।।२०।। अदृश्यत्वादिगुणको धर्मोक्तेः ।।२१।। विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ।।२२।। रूपोपन्यासाच्च ।।२३।। वैश्वानरः साधारणशब्द-विशेषात् ।।२४।। स्मर्यमाणमनुमानं स्यादिति ।।२५।। शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्नः, तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ।।२६।। अत एव न देवता भूतञ्च ।।२७।। साक्षादप्यविरोधं जैमिनिः ।।२८।। अभिव्यक्तेरित्याश्मरथ्यः ।।२६।। अनुस्मृतेर्बादरिः ।।३०।। सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ।।३१।। आमनन्ति चैनमस्मिन् ।।३२।।

।। इति प्रथमाध्यायस्य द्वितीयः पादः ।।

## अथ प्रथमाध्याये तृतीयः पादः

द्युभ्वाद्यायतनं स्वशब्दात् ।।१।। मुक्तोपसृप्यव्यपदेशात् ।।२।। नानुमानमतच्छब्दात् ।।३।। प्राणभृच्च ।।४।। भेदव्यपदेशात् ।।५।। प्रकरणात् ।।६।। स्थित्यदनाभ्याञ्च ।।७।। भूमा सम्प्रसादादध्युपदेशात् ।।८।। धर्मोपपत्तेश्च ।।९।। अक्षरमम्बरान्तधृतेः ।।१०।। सा च प्रशासनात् ।।११।। अन्यभावव्यावृत्तेश्च ।।१२।। ईक्षति कर्मव्यपदेशात् सः ।।१३।। दहर उत्तरेभ्यः ।।१४।। गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च ।।१५।। धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ।।१६।। प्रसिद्धेश्च ।।१७।। इतरपरामर्शात् स इति चेन्नासम्भवात् ।।१८।। उत्तराच्चेदाविर्भूतस्वरूपस्तु ।।१९।। अन्यार्थश्च परामर्शः ।।२०।। अल्पश्रुतेरिति चेत्तदुक्तम् ।।२१।। अनुकृतेस्तस्य च ।।२२।। अपि च स्मर्यते ।।२३।। शब्दादेव प्रमितः ।।२४।। हृद्यपेक्षया तु मनुष्याधिकारत्वात् ।।२५।। तदुपर्यपि बादरायणः सम्भवात् ।।२६।। विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ।।२७।। शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ।।२८।। अत एव च नित्यत्वम् ।।२९।। समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ।।३०।। मध्वादिष्वसम्भवादनधिकारं जैमिनिः ।।३१।। ज्योतिषि भावाच्च ।।३२।। भावं तु बादरायणोऽस्ति हि ।।३३।। शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ।।३४।। क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ।।३५।। संस्कारपरामर्शात् तदभावाभिलापाच्च ।।३६।। तदभावनिर्धारणे च प्रवृत्तेः ।।३७।। श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ।।३८।। प्राणः कम्पनात् ।।३९।। ज्योतिर्दर्शनात् ।।४०।। आकाशोऽर्थान्तरत्वादिव्यपदेशात् ।।४१।। सुषुत्युत्क्रान्त्योर्भेदेन ।।४२।। पत्यादिशब्देभ्यः ।।४३।।

।। इति प्रथमाध्यायस्य तृतीयः पादः ।।

## अथ प्रथमाध्याये चतुर्थः पादः

आनुमानिकमप्येकेषामिति चेन्न; शरीररूपकविन्यस्तगृहीते दर्शयति च ।।१।। सूक्ष्मं तु तदर्हत्वात् ।।२।। तदधीनत्वादर्थवत् ।।३।। ज्ञेयत्वावचनाच्च ।।४।। वदतीति चेन्न; प्राज्ञो हि प्रकरणात् ।।५।। त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ।।६।। महद्वच्च ।।७।। चमसवदविशेषात् ।।८।। ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ।।९।। कल्पनोपदेशाच्च मध्वादिवदविरोधः ।।१०।। न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ।।११।। प्राणादयो वाक्यशेषात् ।।१२।। ज्योतिषैकेषामसत्यन्ने ।।१३।। कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ।।१४।। समाकर्षात् ।।१५।। जगद्वाचित्वात् ।।१६।। जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ।।१७।। अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ।।१८।। वाक्यान्वयात् ।।१९।। प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ।।२०।। उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ।।२१।। अवस्थितेरिति काशकृत्स्नः ।।२२।। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ।।२३।। अभिध्योपदेशाच्च ।।२४।। साक्षाच्चोभयाम्नानात् ।।२५।। आत्मकृतेः परिणामात् ।।२६।। योनिश्च हि गीयते ।।२७।। एतेन सर्वे व्याख्याताः व्याख्याताः ।।२८।।

।। इति प्रथमाध्यायस्य चतुर्थः पादः ।।

## अथ द्वितीयाध्याये प्रथमः पादः

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाश दोषप्रसङ्गात् ।।१।। इतरेषाञ्चानुपलब्धेः ।।२।। एतेन योगः प्रत्युक्तः ।।३।। न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ।।४।। अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ।।५।। दृश्यते तु ।।६।। असदिति चेन्न; प्रतिषेधमात्रत्वात् ।।७।। अपीतौ तद्वत्प्रसङ्गा-दसमञ्जसम् ।।८।। न तु दृष्टान्तभावात् ।।९।। स्वपक्षदोषाच्च ।।१०।। तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ।।११।। एतेन शिष्टापरिग्रहा अपि व्याख्याताः ।।१२।। भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ।।१३।। तदनन्यत्वमारम्भणशब्दादिभ्यः ।।१४।। भावे चोपलब्धेः ।।१५।। सत्वाच्चावरस्य ।।१६।। असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ।।१७।। युक्तेः शब्दान्तराच्च ।।१८।। पटवच्च ।।१९।। यथा च प्राणादि ।।२०।। इतरव्यपदेशाद् हिताकरणादिदोषप्रसक्तिः ।।२१।। अधिकं तु भेदनिर्देशात् ।।२२।। अश्मादिवच्च तदनुपपत्तिः ।।२३।। उपसंहारदर्शनान्नेति चेन्न क्षीरवृद्धि ।।२४।। देवादिवदपि लोके ।।२५।। कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ।।२६।। श्रुतेस्तु शब्दमूलत्वात् ।।२७।। आत्मनि चैवं विचित्राश्च हि ।।२८।। स्वपक्षदोषाच्च ।।२९।। सर्वोपेता च तद्दर्शनात् ।।३०।। विकरणत्वान्नेति चेत्तदुक्तम् ।।३१।। न प्रयोजनवत्त्वात् ।।३२।। लोकवत्तु लीलाकैवल्यम् ।।३३।। वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ।।३४।। न कर्माविभागादिति चेन्नानादित्वात् ।।३५।। उपपद्यते चाप्युपलभ्यते च ।।३६।। सर्वधर्मोपपत्तेश्च ।।३७।।

।। इति द्वितीयाध्यायस्य प्रथमः पादः ।।

## अथ द्वितीयाध्याये द्वितीयः पादः

रचनानुपपत्तेश्च नानुमानम् ।।१।। प्रवृत्तेश्च ।।२।। पयोऽम्बुवच्चेत् तत्रापि ।।३।। व्यतिरेका-नवस्थितेश्चानपेक्षत्वात् ।।४।। अन्यत्राभावाच्च न तृणादिवत् ।।५।। अभ्युपगमेऽप्यर्थाभावात् ।।६।। पुरुषाश्मवदिति चेत् तथापि ।।७।। अङ्गित्वानुपपत्तेश्च ।।८।। अन्यथानुमित्तौ च ज्ञशक्तिवियोगात् ।।९।। विप्रतिषेधाच्चासमञ्जसम् ।।१०।। महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ।।११।। उभयथापि न कर्मातस्तदभावः ।।१२।। समवायाभ्युपगमाच्च साम्यादनवस्थितेः ।।१३।। नित्यमेव च भावात् ।।१४।। रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ।।१५।। उभयथा च दोषात् ।।१६।। अपरिग्रहाच्चात्यन्तमनपेक्षा ।।१७।। समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।।१८।। इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ।।१९।। उत्तरोत्पादे च पूर्वनिरोधात् ।।२०।। असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ।।२१।। प्रतिसंख्याऽप्रतिसंख्या-निरोधाप्राप्तिरविच्छेदात् ।।२२।। उभयथा च दोषात् ।।२३।। आकाशे चाविशेषात् ।।२४।। अनुस्मृतेश्च ।।२५।। नासतोऽदृष्टत्वात् ।।२६।। उदासीनानामपि चैवं सिद्धिः ।।२७।। नाभाव उपलब्धेः ।।२८।। वैधर्म्याच्च न स्वप्नादिवत् ।।२९।। न भावोऽनुपलब्धेः ।।३०।। क्षणिकत्वाच्च ।।३१।। सर्वथानुपपत्तेश्च ।।३२।। नैकस्मिन्न सम्भवात् ।।३३।। एवं चात्माऽकार्त्स्न्यम् ।।३४।। न च पर्यायादप्यविरोधो विकारादिभ्यः ।।३५।। अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ।।३६।। पत्युरसामञ्जस्यात् ।।३७।। सम्बन्धानुपपत्तेश्च ।।३८।। अधिष्ठानानुपपत्तेश्च ।।३९।। करणवच्चेन्न भोगादिभ्यः ।।४०।। अन्तवत्त्वमसर्वज्ञता वा ।।४१।।

उत्पत्यसम्भवात् ।।४२।। न च कर्तुः करणम् ।।४३।। विज्ञानादिभावे वा तदप्रतिषेधः ।।४४।। विप्रतिषेधाच्च ।।४५।।

।। इति द्वितीयाध्यायस्य द्वितीयः पादः ।।

## अथ द्वितीयाध्यायस्य तृतीयः पादः

न वियदश्रुतेः ।।१।। अस्ति तु ।।२।। गौण्यसम्भवात् ।।३।। शब्दाच्च ।।४।। स्याच्चैकस्य ब्रह्मशब्दवत् ।।५।। प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ।।६।। यावद्विकारं तु विभागो लोकवत् ।।७।। एतेन मातरिश्वा व्याख्यातः ।।८।। असम्भवस्तु सतोऽनुपपत्तेः ।।६।। तेजोऽतस्तथा ह्याह ।।१०।। आपः ।।११।। पृथिव्यधिकाररूपशब्दान्तरेभ्यः ।।१२।। तदभिध्यानादेव तु तल्लिङ्गात् सः ।।१३।। विपर्ययेण तु क्रमोऽत उपपद्यते च ।।१४।। अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ।।१५।। चराचरव्यपाश्रयस्तु तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।।१६।। नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ।।१७।। ज्ञोऽत एव ।।१८।। उत्क्रान्तिगत्यागतीनाम् ।।१६।। स्वात्मना चोत्तरयोः ।।२०।। नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ।।२१।। स्वशब्दोन्मानाभ्यां च ।।२२।। अविरोधश्चन्दनवत् ।।२३।। अवस्थितिवैशेष्यादिति चेन्नाभ्युमगमाद् हृदि हि ।।२४।। गुणाद्वा लोकवत् ।।२५।। व्यतिरेको गन्धवत् ।।२६।। तथा च दर्शयति ।।२७।। पृथगुपदेशात् ।।२८।। तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ।।२६।। यावदात्मभावित्वाच्च न दोष-स्तद्दर्शनात् ।।३०।। पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ।।३१।। नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ।।३२।। कर्त्ता शास्त्रार्थवत्त्वात् ।।३३।। विहारोपदेशात् ।।३४।। उपादानात् ।।३५।। व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ।।३६।। उपलब्धिवदनियमः ।।३७।। शक्तिविपर्ययात् ।।३८।। समा-ध्यभावाच्च ।।३६।। यथा च तक्षोभयथा ।।४०।। परात्तु तत् श्रुतेः ।।४१।। कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ।।४२।। अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ।।४३।। मन्त्रवर्णाच्च ।।४४।। अपि च स्मर्यते ।।४५।। प्रकाशदिवन्नैवं परः ।।४६।। स्मरन्ति च ।।४७।। अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ।।४८।। असन्ततेश्चाव्यतिकरः ।।४६।। आभास एव च ।।५०।। अदृष्टानियमात् ।।५१।। अभिसन्ध्यादिष्वपि चैवम् ।।५२।। प्रदेशादिति चेन्नान्तर्भावात् ।।५३।।

।। इति द्वितीयाध्यायस्य तृतीयः पादः ।।

## अथ द्वितीयाध्याये चतुर्थः पादः

तथा प्राणाः ।।१।। गौण्यसम्भवात् ।।२।। तत्प्राक् श्रुतेश्च ।।३।। तत्पूर्वकत्वाद् वाचः ।।४।। सप्तगतेर्विशेषितत्वाच्च ।।५।। हस्तादयस्तु स्थितेऽतो नैवम् ।।६।। अणवश्च ।।७।। श्रेष्ठश्च ।।८।। न वायुक्रिये पृथगुपदेशात् ।।६।। चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ।।१०।। अकरणत्वाच्च न दोषस्तथा हि

दर्शयति ।।११।। पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ।।१२।। अणुश्च ।।१३।। ज्योतिराद्यधिष्ठानं तु तदामननात् ।।१४।। प्राणवता शब्दात् ।।१५।। तस्य च नित्यत्वात् ।।१६।। त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ।।१७।। भेदश्रुतेः ।।१८।। वैलक्षण्याच्च ।।१९।। संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ।।२०।। मांसादि भौमं यथाशब्दमितरयोश्च ।।२१।। वैशेष्यात्तु तद्वादस्तद्वादः ।।२२।।

।। इति द्वितीयाध्यायस्य चतुर्थः पादः ।।

## अथ तृतीयाध्याये प्रथमः पादः

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ।।१।। त्र्यात्मकत्वात्तु भूयस्त्वात् ।।२।। प्राणगतेश्च ।।३।। अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ।।४।। प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ।।५।। अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ।।६।। भाक्तं वाऽनात्मवित्वात् तथा हि दर्शयति ।।७।। कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ।।८।। चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ।।९।। आनर्थक्यमिति चेन्न तदपेक्षत्वात् ।।१०।। सुकृतदुष्कृते एवेति तु बादरिः ।।११।। अनिष्टादिकारिणामपि च श्रुतम् ।।१२।। संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ।।१३।। स्मरन्ति च ।।१४।। अपि च सप्त ।।१५।। तत्रापि च तद्व्यापारादविरोधः ।।१६।। विद्याकर्मणोरिति तु प्रकृतत्वात् ।।१७।। न तृतीये तथोपलब्धेः ।।१८।। स्मर्यतेऽपि च लोके ।।१९।। दर्शनाच्च ।।२०।। तृतीयशब्दावरोधः संशोकजस्य ।।२१।। साभाव्यापत्तिरुपपत्तेः ।।२२।। नातिचिरेण विशेषात् ।।२३।। अन्याधिष्ठितेषु पूर्ववदभिलापात् ।।२४।। अशुद्धमिति चेन्न शब्दात् ।।२५।। रेतः सिग्योगोऽथ ।।२६।। योनेः शरीरम् ।।२७।।

।। इति तृतीयाध्यायस्य प्रथमः पादः ।।

## अथ तृतीयाध्याये द्वितीयः पादः

सन्ध्ये सृष्टिराह हि ।।१।। निर्मातारं चैके पुत्रादयश्च ।।२।। मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ।।३।। सूचकश्च हि श्रुतेराचक्षते च तद्विदः ।।४।। पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ।।५।। देहयोगाद्वा सोऽपि ।।६।। तदभावो नाडीषु तच्छ्रुतेरात्मनि च ।।७।। अतः प्रबोधोऽस्मात् ।।८।। स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ।।९।। मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ।।१०।। न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ।।११।। न भेदादिति चेन्न प्रत्येकमतद्वचनात् ।।१२।। अपि चैवमेके ।।१३।। अरूपवदेव हि तत्प्रधानत्वात् ।।१४।। प्रकाशवच्चावैयर्थ्यात् ।।१५।। आह च तन्मात्रम् ।।१६।। दर्शयति चाथो अपि स्मर्यते ।।१७।। अत एव चोपमा सूर्यकादिवत् ।।१८।। अम्बुवदग्रहणात्तु न तथात्त्वम् ।।१९।। वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ।।२०।। दर्शनाच्च ।।२१।। प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।।२२।। तदव्यक्तमाह हि ।।२३।। अपि संराधने प्रत्यक्षानुमानाभ्याम् ।।२४।। प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यध्यासात् ।।२५।। अतोऽनन्तेन तथा हि लिङ्गम् ।।२६।। उभयव्यपेदशात्वहिकुण्डलवत् ।।२७।। प्रकाशाश्रयवद्वा तेजस्त्वात् ।।२८।। पूर्ववद्वा ।।२९।। प्रतिषेधाच्च

